श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रलयाश्चत्वारस्तत्रैष प्रलयो नैमित्तिकः प्रथमः विश्वसृक् श्रीनारायणः आत्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते आत्मभूर्ब्रह्मा च तस्मिन् प्रविश्य शेते अत एव ब्रह्मणो निद्रां निमित्ती-कृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिकः एष एव दैनन्दिन-शब्दवाच्यश्च ॥ ४ ॥

प्राकृतिकं प्रलयमाह—द्विपरार्द्धेति द्वाभ्याम् । आद्यः परार्द्धो-ऽपक्रान्त एव द्वितीयेऽपि परार्द्धे अतिक्रान्ते सति ब्रह्मण आयुः-समाप्तौ सत्यां सप्तप्रकृतयो महदहङ्कारतन्मात्रपञ्चकानि ॥ ५ ॥

प्रकृतेः सकाशादुद्भूतवस्तूनां प्रकृतावेव प्रवेशात् प्राकृतिकः सङ्घातः महदादितत्त्वसमूह एवाण्डकोशः विघाते विघात-काल उपसन्ने सति ॥ ६ ॥

तत्र प्रकारमाह—पर्जन्य इति, ॥ ७–८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं राजेद्दहाद्युपलक्षितं सर्वं प्राकृतं निरोधविषयमुक्त्वाऽथ निरोधं प्रपञ्चयति । चतुर्थाध्यायेन, तत्र तावद् यत्पृष्टं कलिदोष-निवृत्त्युपायादिकं तदुत्तरं दत्त्वा यच्च पृष्टं युगानित्यनेन युग-मानमिति प्रलयकल्पयोर्मानं, कालस्य च गतिं ब्रूहीति, तदुत्तरमाह—काल इति । ते तुभ्यं "सकालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्" इत्यादिना तृतीयस्कन्धे कालः कथितः "चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । संख्या-तानि सहस्राणि द्विगुणानि शतानि च" इति युगमानं च कथि-तम् अधुना कल्पलयावपि शृणु तयोर्मानं शृणु इति यावत् ॥१॥

तत्र तावत्कल्पमानमाह—चतुर्युगसहस्रमिति, ॥ २ ॥

प्रलयस्तु चतुर्विधः, नैमित्तिकः प्राकृतिकः आत्यन्तिको नित्यश्च. तत्र तावन्नैमित्तिकं प्रलयं मानसहितमाह—तदन्त इति । तदन्ते तस्य चतुर्युगसहस्रात्मकस्य ब्रह्मणो दिनस्यान्ते तावान् चतुर्युगसहस्रप्रमाणः प्रलयः सैव ब्राह्मी रात्रिः ॥ ३ ॥

तत्र विश्वसृक् श्रीनारायणः अनन्तः शेषः आसनं शयनं यस्य सः विश्वं लोकत्रयमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते आत्मभूः ब्रह्मा च तस्मिन् शेते स च श्रीमन्नारायणो ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्य-भिधीयते कल्पान्ते श्रीनारायणे ब्रह्मादीनां प्रवेश उक्तो हरिवंशे

"ब्रह्माणमग्रतः कृत्वा प्रभवं विश्वतो मुखम् ।
सर्वे देवगणाश्चैव त्रयस्त्रिंशच्च रुद्रजाः ।
प्रविशन्ति महायोगं हरिं नारायणं प्रभुम्" ॥

इति ॥ ४ ॥

अथ प्राकृतिकं प्रलयमाह—द्विपरार्द्धे इत्यष्टाभिः । महदहङ्कारौ पञ्चतन्मात्राणि चेत्येवं सप्त ॥ ५ ॥

एष वक्ष्यमाणकार्यकारणात्मिकायाः प्रकृतेर्लक्षणेन प्रका-रेण परे देवे लयात् प्राकृतिको लय इत्यभिधीयते इत्याह—एष इति विघाते विनाशनिमित्ते उपसादिते कालेन प्रापिते सति सप्तप्रकृतिसङ्घातः अण्डकोशः लीयते मूलप्रकृताविति शेषः ॥६॥

तदेवाह—पर्जन्य इत्यादिना ॥ ७ ॥

पिबते आकर्षति ॥ ८—९ ॥

---

भाषा टीका ।

श्रीहरये नमः ।

श्रीशुक उवाच ।

श्रीशुकदेवजी बोले, कि—हे राजन्! परमाणु से लेकर द्विपरार्द्ध पर्यंत कालका वर्णन तथा युगों का परिमाण हमने तुमारे आगे तृतीय स्कन्ध में वर्णन किया, अब तुम सावधान होकर कल्प और प्रलय को श्रवण करो ॥ १ ॥

एक सहस्र चतुर्युगी को ब्रह्माजी का दिन कहते हैं, और उसी का नाम कल्पभी है, हे राजन्! जिसमें, कि—चतुर्दश १४ मनु राज करते हैं ॥ २ ॥

तिसके अन्त में उतनाही भारी प्रलय होता है, जिसको ब्रह्माजी की रात्रि कहते हैं उस समय में भूलोक भुवर्लोक और स्वर्ग लोक इन तीनों लोकों का प्रलय होजाता है ॥ ३ ॥

यही नैमित्तिक प्रलय कहा जाता है, इसी नैमित्तिक प्रलय में श्रीनारायण सम्पूर्ण विश्वको अपने विषय में उपसंहार करके श्रीशेषभगवान् पर आसन लगा कर शयन करते हैं, और उन श्रीनारायण के विषय ही ब्रह्माजी शयन करते हैं, ब्रह्माकी निद्राको निमित्त मानकर निद्रापर्यन्त वह प्रलय होता है इसी से यह नैमित्तिक प्रलय कहा जाता है ॥ ४ ॥

परमेष्ठी श्रीब्रह्माजी का जब द्विपरार्द्ध अतिक्रान्त हो जाता है तब, अर्थात् ब्रह्मा के आयु पूर्ण होने पर, सातों प्रकृति प्रलय को प्राप्त होती हैं, महत्तत्त्व अहङ्कार और शब्दादि तन्मात्रा ये सातों अपने २ कारणों में लीन होजाते हैं ॥ ५ ॥

हे राजन्! यह सप्त प्रकृतियों के लीन होने से प्राकृतिकप्रलय कहा जाता है, और इस प्रलय में कारणों का नाश प्राप्त होने से ब्रह्माण्ड रूप कार्य का भी प्रलय हो जाता है ॥ ॥

हे राजन्! जब प्रलय होता है तब प्रथम सौ सौ १०० वर्ष तक मेघ नहीं वर्षते हैं, उस समय निरन्न इस संसार में क्षुधासे व्याकुल होकर जन्तु परस्पर में भक्षण करने लगते हैं ७ ॥

उस कालके उपद्रव से प्रजा लोग धीरे २ नाश को प्राप्त होते हैं । उस समय प्रलय कालके सूर्य भी अपनी तीक्ष्ण किरणों से समुद्र सम्बन्धि देह सम्बन्धि भूमि सम्बन्धि तीनों रसों को शोष लेते हैं ॥ ८ ॥

---

रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ।
ततः सम्वर्तको वह्निः सङ्कर्षणमुखोत्थितः ॥ ९ ॥
दहत्यनिलवेगोत्थः शून्यान्भूविवरानथ ।
उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ॥ १० ॥
दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ।
ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ॥ ११ ॥
परः साम्वर्तको वाति धूम्रं खं रजसाऽऽवृतम् ।
ततो मेघकुलान्यङ्ग ! चित्रवर्णान्यनेकशः ॥ १२ ॥
शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः ।
तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ॥ १३ ॥
तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लवे ।
ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते ॥ १४ ॥
अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ।
ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ॥ १५ ॥
लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ।
स वै विशति खं राजंस्ततश्च नभसो गुणम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अनिलवेगोत्थो वायुवेगोद्भूतः अनिलवेगो वा इति पाठे अनिलेन वेगो यस्य सः वा: रविणा रश्मिभिः पीतमुदकं च दहतीत्यर्थः । अनिलवेगो वै इति तु पाठः सुगमः भूविवरान् पातालादीन् शून्यान् रविणा दैहिकरसाकर्षणात्प्राणरहितान् शिखाभिर्ज्वालाभिः ॥ १० ॥

किञ्चिदधिकं वर्षाणां शतं सम्वर्तकः प्रलयहेतुकः परो वायुर्वाति तदा रजसाऽऽवृतं खं धूम्रं भवति ॥ ११ ॥ १२ ॥

रभसस्वनैस्तीव्रगर्जितैः ब्रह्माण्डविवरान्तरं ब्रह्माण्डविवरमध्यगतं विश्वमेकोदकमेकार्णवोदकव्याप्तं भवति ॥ १३ ॥

उदप्लवे उदकेनाप्लवे सति प्रलयत्वायाभावाय ॥ १४-१६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भूविवराणि पातालादीनि ॥ १०—१४ ॥
तेजः ग्रसतीत्यन्वयः । ता आपः ॥ १५-१६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

दुःसहैः रश्मिभिः पिबते न त्वघुनेव पीत्वा विमुञ्चतीत्यर्थः । तत इति अनिलवेगोत्थः वायुवेगोत्थः प्रलयाग्निः अनिलवेगो वा इति पाठे वाऽजलं रविणा पीतावशिष्टोदकं च दहतीत्यर्थः । वैकल्पपाठस्तु सुगमः । अनिलेन वेगो यस्य स इति पाठद्वयेऽर्थः । ततः शून्यान् त्रिलोकान् भूविवरान् पातालादीनि च दहतीति सम्बन्धः इत्थमुपर्यधः समन्ताच्च वह्निसूर्ययोः शिखाभिर्ज्वालाभिर्दह्यमानं ब्रह्माण्डं दग्धगोमयपिण्डवद्विभाति वर्तिष्यते तत इति वर्षाणामधिकं शतं किञ्चिदधिकं वर्षाणां शतमित्यर्थः । प्रचण्डोऽतिनिष्ठुरः ॥ ९—११ ॥

परः बलीयान् सांवर्तकः प्रलयवायुर्वाति तदा रजसावृतं समाकाशं धूम्रं भविष्यति ततो मेघकुलानीति । अङ्ग हे राजन् ! रभसस्वनैः तीव्रगर्जितैर्नदन्ति गर्जितानि करिष्यन्ति चेत्यर्थः । त्वयस्येन तृतीया तदा ब्रह्माण्डविवरं मध्यगतं विश्वम् एकोदकम् एकार्णवोदकव्याप्तं भविष्यति तदेत्यम् उदप्लवे उदकप्लवरूपे सति जगति भूमेर्गन्धगुणमापो ग्रसन्ते(न्ति) सोऽन्तु लीयते इत्यर्थः । ग्रस्तः गन्धो यस्याः सा पृथिवी प्रलयत्वायाभावाय कल्पते ॥ १२—१४ ॥

अपामिति । अथोऽनन्तरमपां रसगुणं तेजो ग्रसतीति वचनविपरिणामेनानुवर्तेन सम्बन्धः । अथ नीरसास्ता आपः लीयन्ते तेजसीति विभक्तिविपरिणामेनान्वयेन सम्बन्धः ततस्तेजसो रूपं वायुर्ग्रसते तदा तद्रहितं तेजः वायौ लीयते

शब्दं ग्रसति भूतादिर्नभस्तमनुलीयते ।
तैजसश्चेन्द्रियाण्यङ्ग ! देवान्वैकारिको गुणैः ॥ १७ ॥
महान् ग्रसत्यहङ्कारं गुणाः सत्त्वादयश्च तम् ।
ग्रसतेऽव्याकृतं राजन्!गुणान्कालेन चोदितम् ॥ १८ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

इत्युत्तरेण सम्बन्धः । वायोर्गुणं स्पर्शं खमाकाशो ग्रसते ॥ स वै स्पर्शरहितो वायुः हे राजन् ! खमाकाशं विशति तत्र लीयत इत्यर्थः । ततश्च नभसो गुणं शब्दं भूतादिस्तामसाहङ्कारो ग्रसति तदनु स्वगुणग्रसनानन्तरं नभस्मिन् भूतादौ लीयते इत्यर्थः ॥ तैजसश्चेति । चशब्दः साहित्यद्योतकः राजसाहङ्कारसहितः वैकारिकः सात्त्विकाहङ्कारः गुणैर्वृत्तिभिः सह देवानिन्द्रियाणि ज्ञानेन्द्रियाणि ग्रसते ततोऽहङ्कारत्रिविधं महान् ग्रसते ततः सत्त्वादयो गुणाः तं महान्तं ग्रसन्ति गुणा ग्रसन्तीत्युपचारः गुणमयी प्रकृतिरेव महान्तं ग्रसतीत्यर्थः । ग्रसत इति । हे राजन् ! कालेन चोदितम् अव्याकृतं प्रधानं गुणान् ग्रसति विषमान् गुणान् समीकरोति समीकृतगुणं भवतीति यावत् तन्महदादिनामरूपविभागरहितं गुणसाम्यावस्थं प्रधानमव्याकृतशब्देनाभिधीयते ॥ १५—१८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

साम्वर्तकः प्रलयकालीनः ॥ ९ ॥

सत्वशून्यान् प्राणिरहितान् भूविवरान् पातालादीन् ॥१०–११॥

रजसावृतं खं धूम्रस्थानं चित्रवर्णानि नीलादिनाना विधानि ॥ १२ ॥

ब्रह्माण्डविवरान्तरं ब्रह्माण्डविलविशेषं ब्रह्माण्डबिलोदरं वा पयोदकम् उदकात्मकं भवति ॥ १३ ॥

पञ्चभूतगुणलयप्रकारमाह—तदेति । उपप्लवे प्रलये ॥ १४ ॥

नीरसाः आपः तद्रहितं रूपरहितम् ॥ १५ ॥

तेजो वायौ लीयते स वायुः खं विशति तदनु शब्दगुणक्षयानन्तरं तैजसानीन्द्रियाणि तैजसाहङ्कारे लीयन्ते इति शेषः ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पिबते आकर्षति ॥ ९—१० ॥

किञ्चिदधिकं वर्षाणां शतं व्याप्य वाति तदा रजसाऽऽवृतं खं धूम्रं भवति ॥ ११—१२ ॥

प्रलयत्वाय प्रकृष्टो लयो यस्याः सा प्रलया तस्या भावः प्रलयत्वं तस्मै नाशायेत्यर्थः ॥ १४ ॥

अपां रसं तेजो ग्रसति ॥ १५—१६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शिखाभिः ज्वालाभिः ॥ १०–११ ॥

परः महाबलः रजसाऽऽवृतं खं धूम्रं भवति ॥ १२ ॥

रभसस्वनैस्तीव्रगर्जितैः ॥ १३ ॥

उदप्लवे उदकेन प्लाविते सति प्रलयत्वाय कारणभावाय १४—१५–१६ ॥

भाषा टीका ।

और वर्षा के समय पर उस सर्व रस को नहीं छोडते हैं, किन्तु थोडा २ वर्षते हैं । तब उस समय श्रीसङ्कर्षण देव के मुखसे प्रलय काल का अग्नि प्रकट होता है ॥ ९ ॥

और पवन के वेग से बढा हुआ वह अग्नि शून्य सप्त पातालों को जला देता है, उस समय ऊपर नीचे और चारों तरफ अग्नि और सूर्य की शिखाओं से ॥ १० ॥

जला हुआ यह ब्रह्मांड जले हुये गोबर के कण्डे सदृश देख पडता है, तिसके पश्चात् कुछ अधिक सौ १०० वर्ष तक बडा प्रचण्ड पवन ॥ ११ ॥

अर्थात् प्रलय काल का संवर्त्तक नामक वायु रज से आकाश को धूमल करता हुआ बहता है, तिसके अनन्तर चित्र विचित्र वर्ण वाले अनेक मेघों के समूह ॥ १२ ॥

सौ वर्ष पर्यंत आकाश में घोर शब्द कर वर्षा करते हैं । उस समय में सब विश्व ब्रह्मांड के भीतर और बाहर जलमय होजाता है ॥ १३ ॥

ब्रह्मांड को जल में डूब ने पर पृथिवी के गन्ध रूप गुण को जल ग्रसलेते हैं । जब पृथिवी के गन्ध का ग्रास होजाता है, तब वह पृथिवी अपने कारण में लीन हो जाती है ॥ १४ ॥

ऐसेही जलों के रस को तेज ग्रस लेते हैं तब वे जल भी निरस होकर अपने कारण में लीन होजाता है । इसी प्रकार तेज के रूप को वायु ग्रस लेता है तब वह तेज उस समय रूपसे रहित होजाता है ॥ १५ ॥

और रूप रहित होकर वह तेज अनिल में लीन हो जाता है । तब वायु के स्पर्श गुण को आकाश ग्रस लेता है । हे राजन् ! तब वह वायु आकाश में लीन होजाता है तिसके पश्चात् आकाश का जो शब्द गुण है ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूतादिस्तामसोऽहङ्कारः गुणैर्वृत्तिभिः सह ॥ १७ ॥

अव्याकृतं प्रधानम् ॥ १८ ॥

न तस्य कालावयवैः परिणामादयो गुणाः ।
अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥ १९ ॥
न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी ।
न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य तु क्षयो नास्तीत्याह—न तस्येति । कालावयवैरहोरात्रादिभिः गुणा भावविकाराः परिणामो विपरिणामः अव्यक्तमस्तित्वविकारशून्यं नित्यं सर्वदैकरूपं ह्रासवृद्धिरहितमित्यर्थः । अव्ययमपक्षयशून्यं सर्वत्र हेतुः कारणमिति ॥ १९ ॥

किञ्च, वागादिगोचरस्य सविशेषस्य विकारा भवन्तीदं तु न तथेत्याह—न यत्रेति द्वाभ्याम् । लोककल्पो लोकरूपः सन्निवेशो रचनाविशेषो नास्ति ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

देवान् ज्ञानेन्द्रियाणि अहङ्कारो ग्रसतीत्यध्याहारः गुणा ग्रसन्तीत्युपचारः गुणमयी प्रकृतिरेव ग्रसति महान्तमव्याकृतं गुणान् ग्रसतीति विषमान् गुणान् समीकरोतीत्यर्थः ॥ १७—१८ ॥

परिणामशब्दो वृद्धेः पूर्वावस्थापरः ॥ १९ ॥

न यत्रेति जाग्रत् इत्यादि वचस्तद्गोचरं मनश्च न प्रवर्तत इत्यर्थः । सत्त्वादिशब्दैर्विषमावस्थं गुणत्रयं विवक्षितम् ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, तत्र क्व लीयते ? इत्यभिप्रायमालक्ष्य परस्मिन् देव एवेति वदन् तस्यापि कञ्चिदुपधर्मं धारयितुं परमात्मस्वरूपं शोधयति—न यस्येति त्रिभिः । यच्छब्दस्य "तन्मूलभूतं पदमामनन्ति" इति तृतीयेन सम्बन्धः । पदत्रयेनाऽव्याकृतलयकथनात् विवक्षितम् अव्यक्तस्य लयो नामाऽविभक्तनामरूपतया तमोवस्थापत्तिः यस्य परमात्मस्वरूपस्य कालावयवैरहोरात्रादिभिः परिणामादयो गुणा न सन्ति परिणामशब्दो वृद्धेः पूर्वावस्थापरः तत्र हेतुरनाद्यन्तमाद्यन्तरहितमत एवाऽव्यक्तं व्यक्तैरिन्द्रियैरनुपलभ्यत इति तथा नित्यमित्यनाद्यन्तत्वस्यैव विवरणम् । यद्वा, स्वरूपतः स्वभावतश्च नित्यं कारणमव्यक्तादिपृथिव्यन्तजगत्कारणम् अनेनाऽव्यक्तलयस्थानत्वयोग्यत्वं सूच्यते तथाप्यव्ययं कार्यगतैर्दोषैर्व्येति न वैविध्यं गच्छतीति तथा ॥ १९ ॥

किञ्च, न यत्रेति जायते वर्द्धते इत्यादिवाचः तद्गोचरं मनश्च यत्र न वर्तन्ते यत्र स्वरूपे सत्त्वादयो न सन्ति सत्त्वादिशब्दैः साम्यवैषम्यावस्थं गुणत्रयं विवक्षितम् अनेन गुणत्रयवश्यत्वव्युदासः देवताशब्दो ज्ञानेन्द्रियपरः इन्द्रियशब्दः कर्मेन्द्रियपरः महदादयो न सन्तीत्यनेन कर्मायत्तमहदादिसङ्घातात्मकदेहसम्बन्धव्युदासः करणायत्तज्ञानवत्त्वव्युदासो वा, लोकाः कल्प्यन्ते यत्र स लोककल्पः सन्निवेशः ब्रह्माण्डात्मकः यत्र नेत्यनेन सन्निवेशस्य परमात्मस्वरूपगतत्वव्युदासः । तस्य प्रकृतिस्वरूपगतत्वादिति भावः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

वैकारिका देवाः वैकारिकाहङ्कारे स्वगुणैः सह ॥ १७ ॥

तं महान्तं बीजं व्यञ्जकम् अव्याकृतं मूलप्रकृतिः कालेन हरिणा चोदितं प्रेरितं सत्त्वादिगुणान् ग्रसते ॥ १८ ॥

मूलप्रकृतिस्वरूपं वक्ति—न तस्येति । तस्याऽव्यक्तस्य त्रुटिलवादिकालावयवैः परिणामादयो गुणा न सन्ति तदव्यक्तं मूलप्रकृतिं विश्वसृजां कारणम् आमनन्तीति शेषः इतरविशेषणमुक्तार्थः समभिव्याहारेणाह—अनादीति, ॥ १९ ॥

कालेनेत्युक्तस्य हरेः स्वरूपं दर्शयति—न यत्रेति । वागादयो यत्र कञ्चन विशेषं नापादयन्तीति शेषः ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भूतादिस्तामसोऽहङ्कारः तैजसोऽहङ्कार इन्द्रियाणि ग्रसति महान् अहङ्कारं गुणैस्तद्वृत्तिभिः सह ग्रसति तं महान्तम् ॥ १७ ॥

अव्याकृतं प्रधानम् ॥ १८ ॥

तस्य प्रधानस्य कालावयवैरहोरात्रैः परिणामो विपरिणामः चतुर्थो विकारः अनादीति प्रथमो विकारो जन्मनः अनन्तमित्यन्तो न अव्यक्तमित्यस्तित्वलक्षणविकारो न नित्यं सदैकरूपमिति वृद्धिर्न अव्ययमित्यपक्षयो नेति विकारषट्कं निषिद्धम् ॥ १९ ॥

किञ्च, वागादिगोचरस्य सविकारस्य विकारा भवन्ति इदं तु न तथेत्याह—न यत्रेति द्वाभ्याम् । लोककल्पः लोकरूपसन्निवेशो रचनाविशेषः ॥ २०—२१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भूतादिस्तामसोऽहङ्कारः गुणवृत्तिभिः सह तैजस इन्द्रियाणि ग्रसति अनेनेन्द्रियाणां स्वरूपतोऽणुत्वेऽपि वृत्तितः किञ्चिद्व्यापकत्वमिति सूचितम् ॥ १७ ॥

अव्याकृतं मूलप्रकृतिः भगवच्छक्तिः गुणान् सत्त्वादीन् ग्रसते समीकरोति अत्र चकारात् पुरुषाव्यक्तयोरिति वक्ष्यमाणत्वात् सामर्थ्यो बोध्यः प्रकृतिः परे देवे लीयते इति तथा चास्य यो सुबालोपनिषदि "पृथिव्यप्सु लीयते आपस्तेजसि तेजो वायौ

न स्वप्नजाग्रन्न च तत्सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ।
संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ २१ ॥
लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा ।
शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥ २२ ॥
बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् ।
दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २३ ॥
दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग्भवेत् ।
एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रलीयते वायुराकाशे प्रलीयते आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति महानव्यक्ते अव्यक्तमक्षरे अक्षरन्तमसि तमः परे देव एकीभवति” इति । अत्रा-काशान्तः सुगमोऽन्वयः परत्र पाठक्रमादर्थक्रमस्य बलीयस्त्वेन आकाशस्तन्मात्रेषु तन्मात्राणि भूतादौ तामसाहङ्कारे इन्द्रियाणी-न्द्रियेषु कार्यकारणयोरभेदात्स्वकारणे राजसाहङ्कारे लीयन्ते इत्य-न्वयः । तत्र तन्मात्रेष्विति बहुवचनं पृथिव्यादीनामपि गन्धादि-द्वारा लयदर्शनार्थम् इन्द्रियेष्विति बहुवचनात् सात्त्विकाहङ्कारे देवताः मनश्च लीयन्ते इति भावः । त्रिविधोऽप्यहङ्कारो महति महानव्यक्ते लीयते अव्यक्तमक्षरे इत्यत्र गुणसाम्यगुणवैषम्य-कार्योन्मुख्यवस्थाभेदेन तमोऽक्षरमव्यक्तमिति प्रकृतेरवस्थात्रयम् तथाचाव्यक्तमक्षरं लीयते इति कार्योन्मुख्यवस्थां परित्यज्य गुणवैषम्यावस्थां प्राप्नोति प्रकृतिरक्षरं तमभीति गुणवैषम्या-वस्थां परित्यज्य गुणसाम्यावस्थां प्राप्ता सती परे देवे पर-ब्रह्मणि श्रीपुरुषोत्तमे एकीभवति सूक्ष्मशक्तिरूपतयाऽवति-ष्ठत इत्यर्थः ॥ १८ ॥

तस्सर्वकारणं परब्रह्माख्यं तत्त्वं कीदृशमित्याकाङ्क्षायां तत्तत्त्वं निरूपयति—न तस्येति त्रिभिः । अनाद्यन्तमत एव नित्यम् ॥ १९ ॥

वाचो मनश्च इयत्ताबोधकतया यत्र न प्रवर्तन्ते । किञ्च, यत्र सत्त्वादयः सन्निवेशान्ताः प्रातिकूल्येन प्रवर्तन्ते इत्यर्थः । लोकाः भूरादयः कल्पन्ते यत्र स लोककल्पः सन्निवेशः ब्रह्मा-ण्डात्मकः ॥ २० ॥

———

भाषा टीका ।

उस आकाश के शब्द गुण को तामस अहङ्कार ग्रस लेता है, तब आकाश तामस अहङ्कार में लीन होजाता है हे राजन् ! राजस अहंकार वृत्तियों सहित इन्द्रियों को ग्रस लेता है, तथा इन्द्रियों के अधिष्ठातृ देवताओं को सात्त्विक अहंकार ग्रस लेता है ॥ १७ ॥

उस अहंकार को महत्तत्त्व ग्रस लेता है, तब वह त्रिविध अहंकार महत्तत्त्व में लीन होजाता है, और सत्त्वा-त्मिक जो गुण हैं, वे महत्तत्त्व को ग्रस लेते हैं तब मह-त्तत्त्व गुणत्रय में लीन होजाता है । हे राजन् ! तदनन्तर काल से प्रेरित प्रकृति, तीनों गुणों को ग्रस लेती है, तब तीनों गुण प्रकृति में लीन हो जाते हैं ॥ १८ ॥

अब जिस परमात्मा में प्रकृति लीन होती है वहभी क्या किसी में लीन होता है, कि—नहीं ? इस प्रकार के संशयको दूर करने के लिये, परमात्मा के स्वरूप का निरू-पण करते है, वह परमात्मा का स्वरूप कैसा है, कि—जिस परमात्म स्वरूप के क्षण दिन मास वर्षादि कालके अवयवों से परिणामादिक गुण नहीं हैं, क्योंकि ? वह आदि अन्त शून्य है, और इन्द्रियादि करणों से व्यक्त नहीं होता है, तथा स्वरूप और स्वभाव से नित्य है । और अव्यय है अर्थात् कार्यगत दोषों से विविध भाव को नहीं प्राप्त होता है, ऐसा वह परमात्म स्वरूप है ॥ १९ ॥

फिर वह परमात्म स्वरूप कैसा है, कि—जिसमें जायते वर्द्धते इत्यादि वाणी नहीं वर्तती है, और उस वाणी के गोचर मन भी जहां नहीं वर्तता है । और जिसमें सत्त्व रज तम और महदादि प्रकृति के विकार नहीं हैं, तथा प्राण बुद्धि कर्मेन्द्रिय ज्ञान इन्द्रिय से कुछ नहीं है, और जिसमें इन लोकों की कल्पना है वह ब्रह्मांड भी नहीं है ॥ २० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वप्नजाग्रत् स्वप्नजागरावस्थायुक्तं सुषुप्तवदिन्द्रियाभावात् शून्य-सादृश्ये हेतुः अप्रतर्क्यं न पुनः शून्यमेवेत्याह—तदिति, ॥ २१ ।

उपसंहरति—लय इति । शक्तयः सत्त्वादयः ॥ २२ ॥

आत्यन्तिकं लयमाह—बुद्धीन्द्रियेति द्वादशभिः । आत्यन्तिक-लयो मोक्षः स च ब्रह्मज्ञानेन सर्वप्रपञ्चलयात्मकः न च प्रपञ्च-स्याऽऽत्मव्यतिरेके लयः सम्भवतीति ज्ञानरूपाद् ब्रह्मणः पृथ-क्त्वाभावं तस्यासत्त्वमुपपादयति—बुद्धिश्चेन्द्रियाणि चार्थाश्चेत्येवं ग्राहककारणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानमेव भाति न पृथक्

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति । अतो यदाद्यन्तवत्तद्वस्तु अत्रैवं प्रयोगः विमतं सन्न भवति दृश्यत्वात्कारणाव्यतिरेकादाद्यन्तवत्त्वाच्च रज्जुसर्पादिवदिति ॥ २३ ॥

तत्राव्यतिरेकं दृष्टान्तेन प्रपञ्चयति—दीप इति । दीपचक्षूरूपाख्यां तेजोविशेषाणां तेजसो यथा न व्यतिरेकस्तथा धीः कर्त्री खानि करणानि मात्रा विषयाः ऋताद् ब्रह्मणः पृथङ् न स्युर्ब्रह्मकार्यत्वात् नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्याप्यसत्त्वं प्रसज्येत तत्राऽऽह—अन्यतमादिति । कार्यादत्यन्तव्यतिरेकाद् ब्रह्मणः प्रपञ्चाद् ब्रह्मणोऽस्ति व्यतिरेकः प्रपञ्चस्य तु ततो नास्ति व्यतिरेक इत्यर्थः ॥ २४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं लयस्थानम् ॥ २१ ॥

पुरुषस्य लयोऽत्यन्तज्ञानसङ्कोचः अव्यक्तस्य लयो नाम अविभक्ततमोऽवस्थापत्तिः शक्तयः परमात्मनोऽपृथक्सिद्धविशेषणतया शक्तिशब्दवाच्याः सर्वपदार्थाः ॥ २२ ॥

बुद्धीन्द्रियार्थरूपेणेत्याविबुद्धीन्द्रियार्थेति पूर्वश्लोके शक्तिशब्देनोक्तसर्वपदार्थानां परमात्मन्यपृथक्सिद्धविशेषणत्वमेव प्रपञ्चयत्यनेन श्लोकेन ज्ञानशब्दः परमात्मवाची "सत्यं ज्ञानम्" इति प्रयोगात् । बुद्ध्यादिसर्ववस्त्वाश्रयः परमात्मा बुद्धीन्द्रियादिसर्ववस्तुशरीरतया भाति प्रामाणिकैस्तथा ज्ञायत इत्यर्थः । तत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति । परमात्मशरीरत्वेन "यस्य चक्षुः शरीरम्" इत्यादि प्रमाणैर्ज्ञायमानत्वात् अत एव परमात्मानं विना अवस्थानायोगाच्च स एव तच्छरीरको भातीत्यर्थः । परमात्मशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह—आद्यन्तवद्वस्तु तदिति । बुद्धीन्द्रियादिकं न परमात्मस्वरूपवासित्वम् अपि त्वाद्यन्तवत् तस्मादचिद्वस्तुसदृश्यन्तर्भूतमित्यर्थः ॥ २३ ॥

एवं सर्ववस्तुशरीरत्वादपृथक्भाव उक्तः विश्वशरीरस्य तस्य कारणत्वानुपकारकत्वादाधारत्वाच्च अव्यतिरेकमाह—दीप इति । तेजः कार्यं दीपः तेजोऽनुग्राह्यश्चक्षुः इन्द्रियाणि ह्यहङ्कारकाणि तेजस्याश्रितं रूपम् अतो दीपादेर्न तेजो हित्वा वस्थानं बीजशब्दोपलक्षितं बुद्धिरूपान्तःकरणं बुद्धीन्द्रियार्थरूपेणेति पूर्वमुक्तत्वात् एवमिन्द्रियान्तःकरणविषयाणां परमात्मसृष्टत्वात् तदनुग्राह्यत्वात् तदाश्रितत्वाच्च अन्यतमात् बुद्ध्यादिभ्यो विलक्षणतमात् ज्योतिःशब्दवाच्यात् परमात्मनः ऋते तेषां नाऽवस्थानमित्यर्थः ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नेति । स्वप्नजाग्रज्जीववत्स्वप्नजागरादिरूपसङ्कोचविकासादिधर्मभूतज्ञानोऽनाश्रयं नित्यासङ्कुचितज्ञानाश्रयमिति यावत् न च तत् सुषुप्तं सुषुप्त्यवस्थारहितं सामादपि सुषुप्तावत्यन्तज्ञानसङ्कोचस्तद्रहितं चेत्यर्थः । न खम् इत्यादिनाऽऽकाशजलाग्निवाय्वर्कविजातीयत्वं विवक्षितम् अनेन जडप्रकृतिविलक्षणत्वमुक्तम् । न यत्र वाचो न मनश्चेत्यादिना न च तत्सुषुप्तमित्यन्तेन जीववैजात्यमुक्तम् इत्थं जीवजडाभ्यां विलक्षणं परमात्मस्वरूपं शोधितं किं बहुनेत्यभिप्रेत्याह—संसुप्तवच्छून्यवदप्रतर्क्यं यथा संसुप्तस्तद्वत् शून्यशब्देनाकाशो विवक्षितः तद्वच्च संसुप्ते हि जीवे देहान्तरसंस्थितेऽपि बाह्याभ्यन्तरब्राह्मणत्वादिविभागसुखदुःखादिविकारानवभासः आकाशस्य सर्वगतत्वेऽपि व्याप्यगतदोषास्पर्शश्च दृष्टः एवं परमात्मस्वरूपमपि चिदचिदात्मकजगदन्तरात्मतयावस्थितमपि बाह्याभ्यन्तरविकारविधुरमाकाशवन्निर्मलञ्चेत्यर्थः । अप्रतर्क्यं जडजीवसजातीयत्वेन तर्कयितुमशक्यं तदेतन्मूलं सर्वकारणं परमात्मस्वरूपं पदमव्यक्तलयस्थानमामनन्ति वेदान्ता इति शेषः । "महानव्यक्ते लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति" इत्याद्या वेदान्ताः उपपादितजडजीववैजात्यस्याप्रतर्क्यमित्युपसंहार इत्यतो न पौनरुक्त्यम् ॥ २१ ॥

प्राकृतिकप्रलयनिरूपणमुपसंहरति—लय इति । यदा पुरुषाव्यक्तयोर्लयः यदा च शक्तयः पृथिव्यादिमहदन्ताः कालेन विद्रुताः चालिताः (चोदिताः) स्वस्वकारणेषु प्रलीयन्ते स एष प्राकृतिको लय इत्यर्थः । तत्र पुरुषस्य लयो नामात्यन्तज्ञानसङ्कोचेन परमात्मसंश्लेषविशेषः अव्यक्तस्य लयस्तु अविभक्ततमोऽवस्थापत्तिरूप इत्युक्त एव लयो नामाविभक्तनामरूपतमोवस्थाप्राप्तिरेवेति तदर्थः । शक्तिशब्देन पृथिव्यादिसर्वपदार्थानां परमात्मानं प्रत्यपृथक्सिद्धविशेषणत्वं सूचितम् कार्योपयुक्तमपृथक्सिद्धविशेषणं शक्तिः ॥ २२ ॥

एतदेव सुस्पष्टं प्रपञ्चयति—बुद्धीन्द्रियार्थरूपेणेति । ज्ञानशब्दः परमात्मवाची "सत्यं ज्ञानमनन्तम्" इति प्रयोगात् बुद्धीन्द्रियार्थरूपेण बुद्ध्यादयो रूपं शरीरं यस्य तस्य भावस्तत्ता तया बुद्ध्यादिसर्ववस्तुशरीरकतया एवेत्यर्थः । तदाश्रयं बुद्ध्यादिसर्ववस्त्वाश्रयम् अनेन धारकत्वमुक्तम् पूर्वेण तु नियन्तृत्वं नियाम्यं हि शरीरं भाति प्रामाणिकानामिति शेषः । प्रामाणिकैस्तथा ज्ञायत इत्यर्थः । तत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति "यस्य चक्षुः शरीरम्" इत्यादिप्रमाणैः परमात्मशरीरत्वेन ज्ञायमानत्वादत एव परमात्मानं विनाऽवस्थानायोगाच्च स एव तच्छरीरको भातीत्यर्थः । परशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह—आद्यन्तवद्वस्तु तदिति । बुद्धीन्द्रियादिकं न परमात्मस्वरूपवासित्वमपि त्वाद्यन्तवत् एव तद्वस्तु न परस्येकरूपेणात्यवस्तु सततपरिणामि ॥ २३ ॥

एवं सर्ववस्तुशरीरकत्वादपृथग्भाव उक्तः । अथ विश्वशरीरकस्य तस्य कारणत्वानुपकारकत्वाद्धारकत्वाच्चाव्यतिरेकमाह—दीप इति । तेजःकार्यं हि दीपः तेजोनुग्राह्यं चक्षुः इन्द्रियाणि तेजःकारणभूताहङ्कारकार्याणि इति यस्याश्रितं रूपं तद्धर्मः अतो दीपादेर्न तेजो हित्वाऽवस्थानं बीजशब्दोपलक्षितं बुद्धिरूपान्तःकरणं बुद्धीन्द्रियार्थरूपेणेति पूर्वमुक्तत्वात् एवम् इन्द्रियान्तःकरणविषयाणां परमात्मसृष्टत्वात्तदनुग्राह्यत्वात्तदाश्रितत्वाच्चान्यतमाद् बुद्ध्यादिभ्योऽपि विलक्षणतमाज्ज्ञानशब्दवाच्यात्परमात्मन ऋते तेषां नावस्थानम् इत्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आकाशाद्यन्यतमवच्च न भवतीत्याह—न खमिति । "स वा एष आत्मा नेति नेति" इति श्रुतेः । सुषुप्तवत्सुखरूपं सुखमस्यास्तीति सुषुप्तिपदेन सुखं लक्ष्यते । शून्यवत्सूक्ष्मम् अत एवाप्रतर्क्यं तर्कागोचरं मूलभूतं सर्वस्य प्रधानकारणं पद्यत इति पदं गम्यमित्यर्थः ॥ २१ ॥

कालाख्यपरमात्मस्वरूपमुक्त्वा लयं निर्दिशति—लय इति । यदा यस्मिन् लये कालविद्रुताः कालेन समाप्तजीवनावधयः अत एव विवशाः तदधीनाः पुरुषाव्यक्तयोर्ब्रह्मप्रकृत्योः शक्तयः पृथिव्यादयः सम्प्रलीयन्ते एष लयः प्राकृतिको हि नामेति शेषः ॥२२॥

चराचरेऽविद्यमाने किमस्ति तत्राह—बुद्धीति । तदा प्रलये आश्रयन्तेऽनेन चराचरेणेत्याश्रयं प्रपञ्चाधारभूतं ज्ञानं नित्यनिर्दोषज्ञानात्मकं ब्रह्म बुद्धीन्द्रियार्थरूपेण बुद्ध्या ज्ञानात्मिकया लक्ष्यया ज्ञानहेतुत्वेन बुद्धिशब्दवाच्यया श्रव्यया मुक्तभव्यया वा चक्षुरादीन्द्रियविषयसौन्दर्यातिशयेन भाति ज्योतीरूपेण वर्तते कथंकारं वर्तत इति तत्राह—अन्वयव्यतिरेकाभ्यामिति । प्रपञ्चसद्भावासद्भावाभ्यां कालाभ्यां वर्तत इति । यद्वा, बुद्धीन्द्रियात्मकदेहाकारेण "बुद्धिमान्मनोवान्" इत्यादिश्रुतेः । अनेन "सन्धिदेव परितो विराजते" इति पूर्वाचार्यवचनाज्ज्ञातृज्ञेयविवर्जितज्ञानमिति व्याख्यानं प्रत्युक्तं तादृक्ज्ञानस्य पाषाणकल्पत्वेन हेयत्वात् "नासदासीत्" इतीतरवस्तुनिषेधाज्ज्ञात्रादिसद्भावः कथमत्राह—आद्यन्तवदिति । यच्छरीरयोगवियोगवत्तद्वस्तुस्वातन्त्र्यं यदादावन्ते च वर्तमानं लक्ष्यादितत्त्वं तदस्वतन्त्रं यदादिनिधनयुक्तम् उत्पत्तिनाशवद्वस्तुनो ब्रह्मणो व्यतिरिक्तं न भवति तदध्यस्तत्वेन तज्ज्ञाने क्षीयत इति यन्मतं तदासुरम् । तदुक्तम्—

"जीवविष्ण्वोरभेदश्च देहयोगवियोजने ।
विष्णोर्दुःखाज्ञत्वादिपराभावस्तथैव च ॥
अस्वातन्त्र्यं च वेदादावुक्तवद्भासते विभोः ।
क्वचित्क्वचिद्विमोहाय दैत्यादीनां दुरात्मनाम् " ॥

इति ॥ २३ ॥

एतमर्थं सोदाहरणमाह—दीप इति । दीपादिकं ज्योतिषस्तेजसस्तत्त्वाभिव्यक्तिमन्तरेण पृथक् स्वातन्त्र्येण प्रकाशकं न भवेत् एवं बुद्ध्यादिकमपि मारुतान्मुख्यप्राणादपि पृथक् ज्ञानजननशक्तिमत्र वायुना वै गौतमसूत्रेण "प्राणेन हीदम्" इत्यादिश्रुतेः । किमुत परब्रह्मणः "एतस्माज्जायते प्राणः" "आत्मन एव प्राणो जायते, ब्रह्मणो वा एतानि करणानि" इति श्रुतेः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्र तदाश्रयत्वतत्प्रकाश्यत्वव्यतिरिक्तत्वेभ्यो बुद्धीन्द्रियादीनां परमात्मस्वभावशक्तिमयत्वमाह—बुद्धीति । अन्तःकरणबहिःकरणविषयरूपेण परमात्मलक्षणं ज्ञानमेव भाति तस्मादनन्यदेव बुद्ध्यादिवस्त्वित्यर्थः । यतस्तदाश्रयं तेषामाश्रयरूपं तज्ज्ञानं कलीवत्त्वमपि तथापि राजभृत्ययोरिवान्यत एव भेदः स्यात् तत्र हेत्वन्तरेऽप्याह—दृश्यत्वं तत्प्रकाश्यत्वम् अव्यतिरेकः तदव्यतिरेके व्यतिरेकस्ताभ्यां तस्मात् "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा" इत्यादिवत् बुद्ध्यादीनां तत्स्वाभाविकशक्तिमयत्वमेव सेत्स्यतीति भावः । यतश्चाद्यन्तवत् शुक्त्यादौ कदाचिदेवारोपितं रजतं तत् पुनरवस्तु तदाश्रयत्वतत्प्रकाश्यत्वतद्व्यतिरेकाभावात् शुक्त्यादिवस्तु न भवति शुक्त्यादिभ्योऽनन्यच्च भवतीत्यर्थः । ततश्चैकविज्ञाने सर्वविज्ञानप्रतिज्ञाविरुद्ध्येतेति भावः एवमसत्कार्य्यवादान्तरेऽपि ज्ञेयम् ॥ २३ ॥

एकस्यापि वस्तुनोऽशभेदेनाश्रयाश्रयित्वं स्वयमेव दृष्टान्तेन स्पष्टयति—दीप इति । दीपचक्षूरूपाणां महाभूतज्योतिरंशरूपत्वात् दीपादिकं न ततः पृथक् एवं धीप्रभृतीनि ऋतात्परमात्मनो न पृथक् तथापि यथा महाभूतज्योतिर्दीपादिदोषेण न लिप्यते तथा बुद्ध्यादिदोषेण परमात्मापि तद्वदस्याप्यन्यतमत्वादित्याह अन्यतमादिति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपसंहरति—लय इति । शक्तयः सत्त्वाद्या एव लीयन्ते ननु तयोः कदापि कापि क्षतिरिति भावः ॥ २२ ॥

अथ निर्वाणमोक्षार्थिनां ब्रह्मैक्यभावनामय आत्यन्तिकः प्रलय उच्यते ; तत्र सिषाधयिषितं ब्रह्मैक्यं ब्रह्मकार्य्यस्य द्वैतप्रपञ्चस्यासत्त्वे साधित एव स्यादिति प्रौढिश्चेत्सदाऽसत्त्वमेवैवं कार्य्यजातमित्याह—बुद्धीन्द्रियेति नवभिः । ज्ञानं ब्रह्मैव बुद्धीन्द्रियार्थरूपेण भाति बुद्ध्यादीनां ब्रह्मशक्तिपरिणामत्वादिति भावः । ज्ञानं कीदृशम् ? तदाश्रयं तस्य बुद्ध्यादिप्रपञ्चस्य कारणत्वादाश्रयः फलीवत्त्वमपि किञ्च, यत् बुद्ध्यादिप्रपञ्चजातं तत् आद्यन्तवत् उत्पत्तिलयविशिष्टम् अतो वस्तुत्वेनाभिज्ञातमपि असार्वकालिकत्वात् परमार्थतोऽवस्त्वेवेत्यर्थः । अपरावपि हेतू आह—दृश्यत्वञ्च अव्यतिरेकः कारणाद्व्यतिरेकाभावश्च ताभ्यामपि अवस्तु अत्रैवं प्रयोगः बुद्ध्यादिप्रपञ्चजातं दृश्यत्वात् कारणाव्यतिरेकादाद्यन्तवत्त्वाच्च कनककुण्डलादिवत् परमार्थतोऽवस्तु अत्र अवस्तु मिथ्यैवेति मतेऽपि व्याख्यास्यमम् आत्मवदित्यग्रिमग्रन्थमनुसृत्य दृश्यत्वादित्यत्र चिद्भिन्नत्वे सतीति विशेषणमवश्यं देयमन्यथाऽस्य हेतौ व्यभिचारः स्यात् "तासां मध्ये साक्षाद् ब्रह्मगोपालपुरी हि" इत्यादिश्रुत्या भक्तिकृतं तु निर्गुणं, 'निर्गुणो मदपाश्रयः" इत्यादिभगवदुक्त्या च दृश्यानामपि भगवद्धामादीनां निर्गुणत्वप्रतिपादनेन नित्यत्वात् ॥ २३ ॥

अत्र दृष्टान्तः, दीप इति, दीपचक्षूरूपाणां तेजोविशेषाणां ते यथा तेजसः कारणादव्यतिरेकः तथा धीः कर्ता ज्ञानीन्द्रियाणि करणानि मात्रा विषयाः ऋतात् ब्रह्मणः पृथक् न स्युः यथा तेजःकार्याणि दीपचक्षूरूपाणि तेजांस्येवोच्यन्ते एवं ब्रह्मकार्य्यं बुद्धीन्द्रियविषयादिकं ब्रह्मैवोच्यत इत्यर्थः । नन्वेवं कार्य्यकारणयोरभेदे कार्य्यस्यासत्त्वे कारणस्याप्यसत्त्वं प्रसज्येत कारणस्यैव कार्य्यरूपेण परिणतत्वात् तत्राह—अन्यतमात् कार्य्येभ्यः स्वरूपतोऽत्यन्तव्यतिरिक्तात् तस्य कारणरूपायाः प्रकृतेरपि परत्वादिति भावः ॥ २४ ॥

---

**बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते ।**
**मायामात्रमिदं राजन् ! नानात्वं प्रत्यगात्मनि ॥ २५ ॥**

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्मिन् स्वप्नादिकं जीववन्न तथा स्वाद्यो बहिरन्तरूपकारित्वेन नापेक्षिताः किञ्च सर्वनिरपेक्षत्वात् स्वानन्दतृप्तत्वाच्च संसुप्तवत् सर्वाविरोधित्वात्सर्वोपद्रवात्स्पर्शलेशशून्यत्वाच्छून्यवत् यत्तत्त्वं सर्वस्य मूलभूतं वेदाः आमनन्ति ॥ २१ ॥

उपसंहरति—एष इति । यदा पुरुषाव्यक्तयोः उपलक्षणमेतत् तमसोऽपि तथा च पूर्वोक्तानामव्यक्ताक्षरतमःशब्दवाच्यानां प्रकृत्यवस्थानां परे देवे लयः शक्तयश्च पृथिव्यादिमहदन्ता उक्तक्रमेण लीयन्ते तदैष प्राकृतिको लय इत्यभिधीयते यद्वा पुरुषो जीवः तस्य शक्तयो ऽहम्ममादिवृत्तयः ॥ २२ ॥

अथ चेतनाचेतनयोर्ब्रह्मात्मकत्वमवधार्य गेहादौ मदीयत्वाभिमानं देहे आत्मत्वाभिमानं स्वरूपे स्वाधीनत्वाभिमानं च हित्वा ब्रह्मभावापत्तिलक्षणं मोक्षं साधनसम्पत्त्या प्राप्नोति तदेव नित्यप्रलय इति वक्तुं सर्वब्रह्मात्मकत्वपक्षस्य वैदिकस्य विरोधिभूतानां साङ्ख्यवैशेषिकादीनां पक्षाणामप्रामाण्यं द्योतयन् सर्वस्य ब्रह्मकार्यत्वादिना ब्रह्मात्मकत्वमाह—बुद्धीन्द्रियार्थरूपेणेत्यादिना । तत्र साङ्ख्याः अचेतनानां महदहङ्काराकाशादीनामचेतनमब्रह्मात्मकं प्रधानमेव कारणमित्याहुः—तदुक्तं षाष्टिसंहितायाम् "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति तन्मतं निराकरोति बुद्धिश्चेन्द्रियाणि च खं वायुर्ज्योतिरापश्च अर्थात् शब्दादयश्च तदाश्रयभूताः खादयश्च तेषां रूपेण "एतस्माज्जायते प्राणः" मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी" इत्यादिश्रुतिप्रोक्तेन स्वकार्यरूपेण "सत्यं ज्ञानमनन्तं ब्रह्म" इतिश्रुतिप्रोक्तं ज्ञानमेव भाति सर्वस्य विश्वस्य तच्छक्तिपरिणामत्वात् हेतुगर्भं विशेषणं तदाश्रयमिति तेषां बुद्ध्यादीनामाश्रयम् आदौ मध्ये अन्ते च धारकम् अचेतनस्य प्रधानस्य स्वधारकत्वमपि न सम्भवति, कुतः ? एतः परधारकत्वात् प्रयोजनमाह दृश्यत्वाऽव्यतिरेकाऽभ्यामिति । दृश्यत्वाय भोगसुखसिद्ध्यै आ समन्तात् व्यतिरेकः लोकसृष्ट्यादिव्यापाररहितो मोक्षस्तत्सिद्ध्यै च बुद्ध्यादिरूपेण भासि एवम्भूतस्यैव ज्ञानरूपस्य जगत्कारणत्वमपि च "तदैक्षत एकोऽहं बहु स्याम्" इत्यादिश्रुतेः । अतो न प्रधानं जगत्कारणम् एतेन परमाणुकारणवादोऽपि निराकृतः तथाऽऽह भगवान् सूत्रकारः "ईक्षतेर्नाशब्दम्" (१।१।५) इत्यादि केचिद्बाह्याः ब्रह्म मिथ्या जगन्नित्यमित्याहुः तन्मतं निराकरोति—आद्यन्तवदवस्तु सदिति वस्तु कारणं तद्भिन्नमवस्तु कार्यं तदाद्यन्तवदनित्यं भवति अतापि विश्वमावयवात् जगत्कारणं ब्रह्म नित्यं कार्यभूतं जगदनित्यम् शब्दब्रह्मवद्ब्रह्मावमन्तारो बाह्याः श्रेयस्कामैर्मुमुक्षुभिरनवलोक्या इतिभावः । अक्षिमत् मक्रये केचिज्जगत् मिथ्येति प्रलपन्ति ते अप्रमाणिकत्वादुपेक्षणीयाः अध्यासवादस्य भ्रान्तिमूलत्वेनाध्यासगीरिवजू सर्वथा निराकृतत्वादुपरम्यते ॥ २३ ॥

कार्यस्य बुद्ध्यादेः कार्यत्वावच्छिन्न रूपेणानित्यत्वमुक्तम् इदानीं "सदेव सौम्येदमग्र आसीत्" इतिश्रुत्युक्तरीत्या नित्यत्वमाह—दीपइति । दीपः कार्यं चक्षुरिन्द्रियमनुग्राह्यं रूपं गुणाः ज्योतिषः कारणादनुग्राहकादुगुणिनः सकाशाद्यथा पृथक् न भवेत् एवम् ऋतात् सत्यात्कारणात् कार्यभूताः धीप्रभृतयः अन्यतमा न स्युः कार्यमनित्यमपि कारणात्मना नित्यमेवेत्यर्थः । कारणात्पृथङ्न विद्यते इति सत्कार्यवादसिद्धिः ॥ २४ ॥

---

### भाषा टीका ।

और वह आत्मस्वरूप न सोया है, न जागता है न सुषुप्ति अवस्था वाला है । और वह आकाश, जल, पृथिवी वायु, तेज, सूर्य, इनों में से कोई नहीं है, किन्तु इन सबों से भिन्न है, परन्तु वह सोयासा शून्यसा तर्कना में नहीं आता है, उसी को वेद वेदान्त मूल भूत पद कहते हैं यह सब परमात्मा के स्वरूप मात्र का निरूपण है, विग्रह का नहीं ) ॥ २१ ॥

हे राजन् ! यह प्राकृतिक प्रलय का हमने तुम्हारे सामने वर्णन किया, कि—जिसमें पुरुष और प्रकृति का लय होजाता है, और जिसमें काल से प्रेरित पृथिवी से लेकर महत्तत्त्व पर्यन्त सम्पूर्ण कार्य वर्ग अपने कारण में लीन होजाता है । और वह प्रकृति भी पृथिव्यादि विशेष नाम रूप के विभाग रहित होकर, तथा पुरुष भी देव मनुष्यादि नाम रूप विभाग रहित होकर, परमात्मा में लीन रहते हैं यही प्राकृतिक प्रलय कहाता है ॥ २२ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म" इस श्रुति में ज्ञान शब्द से कहे हुए जो परमात्मा हैं, वेही बुद्धि इन्द्रिय इत्यादि के शरीरी होकर बुद्ध्यादि कों के धारक होकर प्रामाणिक लोगों को नियन्ता जाने जाते हैं, एसे नियन्ता देख पड़ने से, तथा परमात्मा की सत्ता के विना पदार्थ की स्थिति न होने से, परमात्मा ही बुद्धीन्द्रियार्थशरीरक भान होते हैं । और बुद्धि इन्द्रियादिक आद्यन्त वाले हैं इसीसे वो एक रूप से नहीं किन्तु निरन्तर परिणाम वाले हैं ॥ २३ ॥

जैसे कि दीप चक्षु और रूप इनों की विना तेज के अवस्थिति नहीं, क्योंकि ? ये तेज के ही कार्यादिक हैं । इसी प्रकार बुद्धि इन्द्रियें और तन्मात्रा ये सब भी, इन सबों से भिन्नतम अर्थात् अत्यन्त विलक्षण जो परमात्मा है तिस विना स्थित नहीं होसके हैं, क्योंकि ? परमात्मा के अर्जे हैं उसी से अनुग्रहीत हैं और उसी के आश्रित हैं तस्मात् इनका परमात्मा से व्यतिरेक नहीं है ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यदा तु बुद्धेरसत्त्वं तदा तदवस्थानां सुतरामसत्त्वमित्याशयेनाऽऽह—बुद्धेरिति । ननु, विश्वतैजसप्राज्ञानामेता अवस्था न

यथा जलधरा व्योम्नि भवन्ति न भवन्ति च ।
ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥ २६ ॥
सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह ।
विनाऽर्थेन प्रतीयेरन् पटस्येवाङ्ग ! तन्तवः ॥ २७ ॥
यत्सामान्यविशेषाभ्यामुपलभ्येत सभ्रमः ।
अन्योन्यापाश्रयात्सर्वमाद्यन्तवदवस्तु यत् ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

बुद्धेरित्याशङ्क्याऽऽह—मायामात्रमिति । इदं विश्वतैजसप्राज्ञरूपम् ॥ २५ ॥

आद्यन्तवत्त्वादित्यस्य हेतोरसिद्धिमाशङ्क्य साधयत्वेन साधयति—यथेति । अवयवीति, यत्सावयवं तदाद्यन्तवद् घटादिवदित्यर्थः । अत उदयाप्ययाद्याद्यन्तवत्त्वाद्विश्वं नश्वरं भवतीत्यर्थः । यद्वा, पृथगेवागमापायित्वाद्विश्वं मिथ्या ब्रह्म तु तदवधित्वात् सत्यमित्यनेन साध्यते दृष्टान्तस्तु पूर्वोक्त एव यथा जलधरा व्योम्नीति दृष्टान्तस्त्वागमापायितदवधित्वमात्रे न तु मिथ्यात्वे ॥ २६ ॥

सत्यमात्रत्वादिति प्रतिज्ञातं कारणस्य सत्यत्वमुपपादयति सत्यमिति । "अवयवः कारणं प्रोक्तो, वाचारम्भणं विकारो नामधेयं, मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिभिः । अत्र युक्तिमपि दर्शयति—विनेति । अङ्ग, हे राजन् ! हि यस्मादर्थेनावयविना पृथगेवावयवाः प्रतीयेरन् यथा पटस्यावयवास्तन्तवः पटात्पृथक् प्रतीयन्ते तद्वदिति ॥ २७ ॥

ननु, कार्याभावे कारणत्वं ब्रह्मणः कुतो घटेत ? सत्यम् तदपि नास्तीव सत्यमित्याह—यदिति । सामान्यं कारणं विशेषः कार्यं तद्रूपेणान्योऽन्यापाश्रयात्परस्परापेक्षत्वेन निरूपणात्तदुत्वादित्यर्थः । अतः कारणत्वमवधित्वं व्यापकत्वमित्यादिकमपि, परस्परापेक्षत्वादाद्यन्तवत्तस्मादसदित्यर्थः । यद्वा, तत्रैव हेत्वन्तरमेतत् यदुपलभ्येत स भ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत् अन्योऽन्यापाश्रयादितीदमपि हेत्वन्तरं गुणगुणिविशेषणविशेष्यव्याप्यव्यापकत्वादिरूपेण परस्पराधीनसिद्धित्वात् तथाभूतस्वप्नवदिति निगमनम् अतो यदाद्यन्तवत्तत्सर्वमवस्त्विति ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं सर्वस्य परमात्माधीनत्वे स्थिते जीवगतावस्थानामपि तथात्वं सिद्धं तत्राधिकविशेषमाह—बुद्धेरिति । अत्र बुद्धिशब्दो जीवात्मधर्मभूतज्ञानपरः । जीवस्य ज्ञानविकाससङ्कोचविशेषरूपज्ञानाद्यवस्थानानात्वं मायामात्रं प्रकृतिसम्बन्धमात्रकृतम् ॥ २५ ॥

एवंविधाः दोषाः स्वाधारस्थापि परमात्मानं न स्पृशन्तीत्याह—यथा जलधरा इति । इदन्तया जलधरा इव इदन्तया भासमानं प्रत्यक्षादि प्रमाणगम्यं विश्वं ह्युत्पत्त्यादीन्प्राप्नोतीत्याद्युक्तेषा योजना ॥ २६ ॥

सत्यमिति । पाणिपादाद्युपलम्भेऽप्यात्मनोऽनुपलम्भस्त्वयुक्त इत्यत्र अवयविनां देवमनुष्यादीनां पाणिपादाद्यवयवाः प्रोक्ताः सन्ति, शास्त्रात् व्यवह्रियन्ते तेतु अर्थेन पुरुषार्थभूतेनात्मस्वरूपेण शेषाविनाभूतधर्मार्पिताः विना प्रतीयेरन् विना प्रतीतिः सर्वथा सम्भवति पटस्येवाङ्ग तन्तव इति जीवानधिष्ठितपटावयववत् जीवाधिष्ठितदेहावयवास्तेतेन विना प्रतीयन्त इत्यर्थः । यद्वा, जगतो ब्रह्मकार्यत्वं पूर्वश्लोकेन प्रकृतं तत्प्रसङ्गेनासत्कार्यवादनिरास उच्यते अवयविनामवयवास्तावत्सन्ति अवयवी न तेभ्योऽतिरिक्तः अतिरेके देवदत्ते न दृश्यावयविनोऽवयवा उपलभ्येरन् तच्च तथोपलभ्यन्ते नहि पटद्रव्यातिरेकेण तन्तव उपलभ्यन्त इत्यर्थः । पूर्वयोजनाऽत्रोपरितनश्लोकसङ्गता ॥ २७ ॥

आत्मनो देहाद्यव्यावृत्ततया प्रतीतिर्भ्रम इत्याह—यत्सामान्येति । साधारणाकाराकारेणारोपितविशेषतया च यदुपलम्भः सम्भ्रमः साधारणाकारस्यारोपितविशेषस्य चान्योन्यापाश्रयात् अन्योन्यसम्बन्धात् अविरोधादित्यर्थः । आत्मस्वरूपादेहस्य व्यावृत्ताकारमाह—सर्वमिति । सर्वशरीरस्याद्यन्तवत्त्वादस्थिरमित्यर्थः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं सर्वस्य परमात्मायत्तसत्तास्थितिप्रवृत्तिकत्वे स्थिते सति जीवगतावस्थानामपि तथात्वं सिद्धं तत्राधिकं विशेषमाह—बुद्धेरिति । अत्र बुद्धिशब्दो जीवात्मधर्मभूतज्ञानपरः जीवस्य ज्ञानविकाससङ्कोचविशेषरूपजाग्रदादिकमवस्थानानात्वं परमात्मनि जीवे मायामात्रं प्रकृतिसम्बन्धमात्रकृतमित्यर्थः ॥ २५ ॥

एवंविधा दोषाः स्वाधारमपि परमात्मानं न स्पृशन्तीत्याह—यथेति । इदन्तया भासमानं प्रत्यक्षादिप्रमाणगम्यं विश्वमवयविनि ब्रह्मणि उदयाद्भवति तस्मिन्नेव क्षयाच्च भवति च शरीरभूतचिदचिद्गता विकाराः स्वरूपस्याकार्यत्वाभिमतमिति भावः ॥ २६ ॥

इत्थं जगतो ब्रह्मकार्यत्वाभिधानात्सत्कार्यवादः फलितः तद्विरुद्धमसत्कार्यवादं निरस्यति—सत्यमिति । अवयविनामवयवाः सन्तावत्सत्यं प्रोक्ताः अबाधिता व्यवह्रियन्त इत्यर्थः । अवयवी तु न तेभ्योऽतिरिक्तः अतिरिक्तत्वे तु पटावयविनः पृथगवयवा उपलभ्येरन् च तथोपलभ्यन्ते न हि पटद्रव्यातिरेकेण तन्तव उपलभ्यन्त इत्यर्थः । तथा सच्चैतन्याच्चिदचिद्ब्रह्मणो न पृथग्भूते

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जगद्रूपं कार्य्यमिति सत्कारणमेव जगदित्यर्थः । अङ्गेति सम्बोधनं द्योतकम् अबाधिततन्त्वात्मकावयवसमुदाय एव व्यातिषङ्गविशेषं गतः पट इत्युच्यते प्रतीयते च तत्र पटरूपं कार्यं न तन्तुभ्योऽतिरिक्तं तथा प्रमाणप्रतिपन्नं चिदचिदीश्वरसमुदायात्मकं "सदेवेदं सौम्येदम्" इत्यादिषु सच्छब्दवाच्यञ्जगद्रूपपरिणामविशेषमापन्नं कार्य्यमित्युच्यते प्रामाणिकैस्तथा तेषां प्रतीयते चातो नासत्कार्य्यत्वमिति भावः । अत्र "पटवच्च"[२।१।१९] इति सूत्रार्थः स्मारितः ॥ २७ ॥

ननु, बुद्धिशब्दान्तरादिभिः कार्य्यकारणयोर्भेद एवेत्यसत्कार्य्यत्वमेवोचितमित्यत आह—यदिति । घटशरावादिषु मृदयं घट इति सामानाधिकरण्येन प्रतीतिविषयं यत्सामान्यशब्देन मृदादिकं कारणं विवक्षितं विशेषशब्देन घटशरावादिविशेषाकारो विवक्षितः स च मृद्गतो विकारः ताभ्यां यदन्यबुद्धिशब्दान्तरादिभिर्द्रव्यान्तरमुपलभ्यते असत्कार्य्यवादिनां सभ्रमः कार्य्यस्य द्रव्यान्तरत्वोपलम्भो भ्रमात्मकः, कुतः ? अन्योन्यापाश्रयत्वात् सामान्यविशेषयोरेव परस्परमाधाराधेयभावेनाश्रितत्वात्सामान्यतस्तद्गतविकारापेक्षया द्रव्यान्तरस्यानुपलम्भाद्बुद्धिशब्दान्तरादीनां विकारनिबन्धनत्वेनाप्युपपत्तेरितिभावः । एवं चिदचिदीश्वरसङ्घातस्य कार्यकारणोभयावस्थत्वं तयोरभेदश्चेत्युपपादितमसत्कार्य्यवादश्च प्रतिक्षिप्तः । अथ कार्यावस्थानामपि चिदचिदीश्वराणां मिथो व्यावृत्ताकारतां विवक्षुस्तावदात्मस्वरूपाद्देहस्य व्यावृत्ताकारमाह—सर्वमिति । यत्सर्वं शरीरमाद्यन्तवद्धातुगर्भमिदमत अवस्त्वनात्मवदित्यर्थः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न स्वप्नेत्यत्र स्वप्नाद्यवस्था अपि न ब्रह्मण इत्युक्तम् । तर्हि कस्य ता इति तत्राह—बुद्धेरिति । बुधं ज्ञानं धीयतेऽस्मिन्निति बुद्धिर्जीवः तस्य जागरणादिकमुच्यते ह "सता सौम्य" इत्यादि श्रुतिसिद्धम् अथ हैं तत्पुरुषः स्वपिति नामेति च अनेन जाग्रदादीनां निरालम्बनतया मिथ्यात्वमपाकृतम् ननु, सु(षु)प्त्याद्यवस्थावद्विश्वादीनामपि नानात्वं सत्यं स्यादिति तत्राह—माया मात्रमिति । प्रत्यगात्मनि परमात्मनि स्थितं नानात्वं मायया स्वेच्छया मात्रं निर्मितं ज्ञातं न स्वाभाविकम् एतेन कृष्णरामादिरूपाणां मिथोमूलरूपेण भेदो निरस्तः । तदुक्तम्—

> "प्रत्येकं विष्णुरूपाणां भ्रान्तिमात्राभिदा मता ।
> जगतश्चैव विष्णोस्तु सत्यो भेदः सदैव तु ॥
> यथाकाशघटौ नित्यं भिन्नावेव परस्परम् ।
> एवमीशो जगच्चैव भिन्नावेव परस्परम् " ॥

इति ॥ २५ ॥

नन्वेवं तर्हि जगद्ब्रह्मणोश्च भेदो न पारमार्थिकः स्यादित्यतः सोदाहरणं भेदस्य सत्यत्वं समर्थयते—यथेति । तदनयोर्मिथो विरुद्धधर्मत्वादेकत्वद्भावः । इदं विश्वं ब्रह्माधारतया सुप्तिसंश्रितौ यानि मगवघनयोराधाराधेययोर्भेदो यथा सत्यस्तथा जगद्ब्रह्मणोरपीति एतदप्युक्तं यथाकाशघनाविष्यादिना ॥ २६ ॥

ननु, जगद्ब्रह्मणोरिवावयवावयविनामपि भेदः सदैव किं न स्यात्पटस्यामी तन्तव इति तत्प्रतीतेरिति ? तत्राह—एत इति । सर्वेषामवयविनां महदादीनां ये अवयवाः प्रोक्ताः खादयः एतेऽर्थेन विना भेदव्यवहारमन्तरेण प्रतीयेरन् हि यस्मात्तस्मादभिन्ना इति शेषः । कथमभेदः ? इत्यत्राह—पटस्येति । पटस्यावयवास्तन्तवो ऽवयविना पटेनाऽभिन्ना इति यथाङ्गीकर्तव्यं तन्तुः पटः मृद्घटः शुक्लः पट इत्याद्यभेदव्यवहारदर्शनात् प्रत्येकं तन्तुना भेदेऽपि समुदायरूपेणाभेद इति प्रकटनाय तन्तव इति बहुवचनम् अत एव—

> अवयव्यवयवाभेदात्कोटयंशो भेद ईरितः ।
> सोपि भेदो न चाभेदात्पृथगेव प्रवर्तते ॥

इति वाक्यमत्र गृहीतम् अनेन कार्यकारणादीनां भेद इति मतमपाकृतं पटस्य तन्तव इति प्रयोगः पटस्य शौक्ल्यमिति वाक्यकर्षणार्थः सोपि श्रीहरिनियत इति न युक्ति विरोधः "अवयव्यवयवानान्तु कार्यकारणवस्तुनाम् । एक एव नियन्ताऽसौ हरिर्नारायणः परः" ॥ इति वाक्यादवगन्तव्यः ॥ २७ ॥

नन्वेवं चेदवयविनि सत्यवयवनाशेतस्यापि तद्भेदः स्यादत्राह—यदिति । यावद्द्रव्यभावि सामान्यमित्युच्यते यदावद्द्रव्यभाविविशेष इति तत्र यद्वस्तु नष्टावयवाभिन्नमित्युपलभ्येत सामान्यावयववत् स बुद्धेर्भ्रमः कुतः अन्योन्यापाश्रयाच्छ्लेषात् तस्मादाद्यन्तवद्वस्त्वेव यद्वा हनुमद्भीमांशानां वाय्वाद्यंशिनां सामान्यविशेषशक्तिदर्शनात्कथमभेदः सङ्गच्छते ? इति तत्राह यदिति । अन्योन्यापाश्रयात् अन्योन्याभेदविषयप्रमाणात् असुरजनमोहाधिकृतत्वेनाद्यन्तवत्त्वाद्वस्तु सर्वमविद्यमानमेव ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं धीप्रभृतीनां परमात्मस्वाभाविकशक्तिमयत्वमुक्त्वा तथापि तेभ्यो बहिरङ्गशक्तिमयेभ्योऽन्तरङ्गशक्तितटस्थशक्तिविशिष्टपरमात्मनोऽन्यतमत्वेन तेषामशुद्धत्वव्यञ्जनया सदोषत्वमुक्त्वा तेषु धीप्रभृतीष्वध्यासं परित्याजयितुं तिसृषु धीवृत्तिषु तावच्छुद्धस्यैव जीवस्य सकारणमध्यासमाह—बुद्धेरिति । बुद्धिवृत्तिरूपं जागरणं स्वप्नः सुषुप्तिः इतीदं प्रत्यगात्मनि शुद्धजीवे विश्वतैजसप्राज्ञत्वाख्यं नानात्वं मायामात्रं मायाकृताध्यासमात्रेण जातमित्यर्थः ॥ २५ ॥

ततः परमात्मनि बुद्ध्यादिमयस्य जगतः सतोपि सम्पर्कः सुतरां नास्तीत्याह—यथेति । यथा व्योम्नि व्योमकार्य्यवाय्वग्निज्योतिः सलिलपार्थिवांशधूमपरिणतजलधराः स्वेषामेवावयविनामुदयात् भवन्ति दृश्यन्ते अस्तयात् भवन्ति न दृश्यन्ते तेच तन्न स्पृशन्तीति शेषः तथा ब्रह्मणीदं विश्वमिति योज्यं ततः सूक्ष्मरूपेण तस्य स्थितिरस्त्येव जगच्छक्तिविशिष्टकारणाद्वितत्वात् इत्यमेवोक्तं सतोभिव्यञ्जकः काल इति ॥ २६ ॥

तदेव वक्तुं कारणास्तित्वं दृष्टान्तेन प्रतिपादयति—सत्यमिति । सर्वेषामवयविनां स्थूलवस्तूनाम् अवयवः कारणं सत्यं सत्यो वाऽभिचाररहितः प्रोक्तः लोके तथा दर्शनादित्याह—विनेति । अर्थेन स्थूलरूपेण पटेनापि विना ॥ २७ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मिन् कार्यास्तित्वमपि व्यतिरेकेण प्रतिपादयति—यदिति । अयमर्थः यद्येवमुच्यते पूर्वं सूक्ष्माकारेणापि जगन्नासीत् किन्तु तदेव शक्त्या निमित्तभूतया विशेषाकारेण जगद्रूपेण परिणत-मिति तदसत् यदेवं सामान्यविशेषाभ्यामुपलभ्येत स भ्रमो विवर्त्तवाद एव तत्र हि शुद्धब्रह्मैवाज्ञानरूपया शक्त्या जग-त्तया विवृतमिति मतं न चास्माकं तदभ्युपपत्तिः परिणाम-वादस्य सत्कार्यतापूर्वकत्वादित्यर्थः । नन्वपूर्वमेव कार्यमारम्भ-विवर्त्तवादिनामिव युष्माकमपि जायतां तत्राह, यदाद्यन्तवत् अपूर्वं कार्यं तत्पुनरवस्तुनिरूपणासहमित्यर्थः । तत्र हेतुः अन्योन्यापाश्रयात् यावत्कार्यं न जायते तावत्कारणत्वं मृच्छु-क्त्यादेर्न सिद्ध्यति कारणत्वासिद्धौ च कार्यं न जायत एवेति परस्य रसापेक्षत्वदोषात् अतः कारणत्वसिद्धये कार्यशक्तिस्तावदवश्यमभ्युपगन्तव्या सा च कार्यसूक्ष्मावस्थैवेति कार्यास्तित्वं सिद्ध्यति तथापि स्थूलरूपतापादकत्वान्मृदादेः कारणत्वमपि सिद्ध्यतीति भावः ॥ २८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यत्तु विश्वस्तैजसः प्राज्ञः इति जीवस्य नानात्वं तत्तु बुद्धि-वृत्तीनां त्रितयत्वात्तस्यापि त्रितयत्वं मिथ्यैवेत्याह—बुद्धेरिति । जागरस्वप्नसुषुप्तयस्तिस्रो वृत्तयो बुद्धेरेवेत्युच्यन्ते अतस्तद-ध्यासात् प्रत्यगात्मनि जीवेऽपि विश्वतैजसप्राज्ञसंज्ञाभिर्नानात्वं मायामात्रं मिथ्यैवेत्यर्थः ॥ २५ ॥

परिणामवादे कार्यकारणाव्यतिरेको दर्शितः अथारम्भ-वादे विश्वस्याद्यन्तवत्त्वं तत्कारणस्य परमेश्वरस्य सत्यत्वं च क्रमेण दर्शयति—यथेति द्वाभ्याम् । भवन्ति नश्यन्ति तथैव ब्रह्मणि विश्वं भवति न भवति च अत्र व्योम्नीति दृष्टान्तेन परमात्मनो निर्लेपता दर्शिता अवयवीति यत्सावयवं तदा-द्यन्तवत् घटादिवदित्यर्थः । अत उदयापयवात् आद्यन्तवद्विश्वं न सर्वदा सत्यमित्यर्थः ॥ २६ ॥

किञ्च, सर्वेषामवयविनाम् अवयवः कारणं सत्यं लोके तथा दर्शनादित्याह—विनेति । अङ्ग हे राजन् ! हि यस्मात् अर्थेनाव-यविना विनापि पृथगेवावयवाः प्रतीयन्ते यथा वस्त्रावयवाः तन्तवः यस्मात् पृथक् प्रतीयन्ते तद्वत् अत्र "कार्यकारणवस्त्वैक्य-दर्शनं पटतन्तुवत्" इति सप्तमोक्तेः सिषाधयिषितं ब्रह्मैक्यं तु लक्ष्यत एव ॥ २७ ॥

विवर्त्तवादे तु ब्रह्मकार्यं जगदसत्यं यथा तथा ब्रह्मणः कारणत्वादिकमप्यसत्यमित्याह—यदिति । सामान्यं कारणं विशेषः कार्यं ताभ्यां यदुपलभ्यते स भ्रमः कुतः ? अन्योन्यापाश्रयात् परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः । अयमर्थः, यथा रज्जु-रेवाज्ञानेन सर्पत्वेन विवर्त्तते तत्र रज्जुः कारणं सर्पः कार्यः स तु मिथ्यैव तथैव सामान्यं ब्रह्मैव अज्ञानेन जगद्रूपतया विवृत्तं तत्र जगतः कार्यस्याभावे तदपेक्षतया सिद्धं ब्रह्मणः कुतः कारणत्वमिति ॥ २८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं द्वाभ्यां श्लोकाभ्यामाचिदंशस्य ब्रह्मकार्यस्यानित्यत्वं नित्यत्वं च दर्शितमथ चेतनस्यापि कार्ये विश्वस्मिन् स्थितस्य विश्वसृष्ट्यादौ ज्ञानविकाससङ्कोचौ भवतः बन्धनमूलतया न तु तत्स्वरूपे किञ्चिद्विकारादिकमस्तीति जागरणादिप्रदर्शनेन सूच-यति—बुद्धेरिति । नानात्वं जाग्रत्त्वसुप्तत्वादि ॥ २५ ॥

ननु, भवतु जीवो निर्विकारस्वरूपः ब्रह्मणि तु जगत्संसर्गजा दोषा बलादेव भविष्यन्ति जगदुपादाननिमित्तकारणत्वादस्येत्यत आह—यथेति । भवन्ति उत्पद्यन्ते न भवन्ति विलीयन्ते नत्वेतावता दोषभाग्भवति तथा अवयविब्रह्मणः परस्परप्रकृतिद्वयसंयुक्तमिदं विश्वं ब्रह्मणि उदयाद्भवति व्ययाच्च भवति ज्ञानसङ्कोचविकास-बन्धमोक्षादयो धर्माः ब्रह्मांशभूतजीवविषयाः विकारत्वादयो धर्माः ब्रह्मशक्तिरूपप्रकृतिविषयाः विश्वसृजननियमनपालनादयः सत्यत्वज्ञानत्वानन्दत्वनिर्विकारत्वादयो धर्माः ब्रह्मविषया इति विवेकः ॥ २६ ॥

अथ सत्कार्यवादं निराचिकीर्षुः ऋतात् धीप्रभृतयोऽन्य-तमाः न स्युरिति प्रागुक्तं सत्कार्यवादं पुनर्दृढयति—सत्यमिति । हे अङ्ग विष्णुदत्त ! सर्वेषामवयविनां रथप्रासादादीनाम् पटस्य तन्तव इव कारणभूताः अवयवाः सत्यं प्रोक्ताः ते एव अवयव्य-वस्थां प्राप्नुवन्ति, तन्निरपेक्षा अवयविनो नोत्पद्यन्ते इति भावः । अन्यथा अर्थेन अवयवभूतेन विनैव रथादयः प्रतीयेरन्नतु निर्बीजाः भवन्ति प्रतीयन्ते वा एवम् इह प्रकृतेऽपि बीजस्य ये सन्मूल-मेव कार्यमुत्पद्यते तथा च श्रुतिः "सन्मूलाः सौम्येमाः प्रजाः" इत्यादिः ॥ २७ ॥

ननु, वायवीयतैजसाप्यपार्थिवपरमाणवो यदि श्रुतिबलाज्जगत्-कारणतया नाङ्गीक्रियन्ते किन्तु सर्वात्मत्वद्योतनार्थं ब्रह्मैव जगत्-कारणतयाङ्गीक्रियते तदापि सर्वात्मत्वं ब्रह्मणो नसङ्गच्छते कार्य-कारणयोरत्यन्तभिन्नत्वादित्यत आह—यदीति । अन्योन्यापाश्रयात् परस्पराश्रयात् बुद्धितः शब्दतः व्यवहारादितश्च कार्यकारण-योरितरेतरः आश्रयो नास्ति, नहि घटबुद्धौ मृत्पिण्डः आश्रयः न च मृत्पिण्डबुद्धौ घटः तथा घटशब्दे उच्चार्यमाणे तदर्थतया न मृत्पिण्ड-स्फूर्त्तिरित्यादि ख्यमूह्यम् तस्मादन्योन्यापाश्रयाद्धेतोः सामान्य-विशेषाभ्याम् सामान्यं कारणं मृत्पिण्डादिर्विशेषः कार्यं घटादि ताभ्यां व्यवह्रियमाणाभ्याम् यत् यस्तयोऽत्यन्तभेदबोधः उपलभ्येत स वैशेषिकाणां भ्रमः मृत्पिण्डं विना घटत्वाभासाभावात् अतोऽसत्कार्य-वादो मुमुक्षुभिर्हेय इति भावः । ननु, तर्हि कार्यस्य जगतोऽपि ब्रह्मत्वा-त्तत्परित्यागपूर्वकं ब्रह्मभावापत्तिर्मुक्तिरिति कोऽयं दुराग्रहः ? इत्यत आह, सर्वमाद्यन्तवदस्तु यदिति । वस्तु कारणं तद्भिन्न-मसत्तु कार्यं यत् तत्सर्वमाद्यन्तवद्वतो नित्यब्रह्मभावप्राप्तिरिष्टेति भावः ॥ २८ ॥

---

### भाषा टीका ।

बुद्धि अर्थात् जीवात्मा के धर्म भूतज्ञान की जागरण, स्वप्न और सुषुप्ति, ये तीन अवस्था हैं, हे राजन ! सो ये तीन अवस्था प्रत्यगात्मा ( जीव ) में प्रकृति के सम्बन्ध होने से

विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा।
न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥ २९ ॥
नहि सत्यस्य नानात्वमविद्वान् यदि मन्यते।
नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वा तयोरिव ॥ ३० ॥
यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु।
एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥ ३१ ॥
यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः।
एवं त्वहं ब्रह्मगुणास्तदीक्षितो ब्रह्मांशकस्याऽऽत्मन आत्मबन्धनः ॥ ३२ ॥

भाषा टीका।

हैं, ये तीनों अवस्था प्रकृति विनिर्मुक्त आत्मा की नहीं हैं ॥ २५ ॥

जैसे, कि—आकाश में जलधर (मेघ) होते हैं, और विलीन होजाते हैं, परन्तु उनके होने न होने से आकाश में कुछ विकार नहीं होता, किन्तु वह स्वरूप से निर्मल ही रहता है। इसी प्रकार अवयवि यह विश्व भी परमात्मा के विषैं उदय होने से होता है, लय होने से नहीं होता है, परन्तु इस विश्व के होने न होने से कुछ परमात्मा के स्वरूप में विकार नहीं होता है, किन्तु विशेषणांशमें ही विकार है, तस्मात् श्रुतिप्रतिपाद्य परमात्मा का स्वरूप निर्मल ही है ॥ २६ ॥

लोक में सब अवयवियों के अवयव कारण होने से सत्य कहलाते हैं, परन्तु वे अवयव अवयविदशापत्ति-काल में अवयविरूप अर्थ के विना प्रतीत नहीं होते हैं। हे राजन्! जैसे, कि—पटके तन्तु पटावस्था को प्राप्त होने पर पट से अलग नहीं देख पड़ते हैं, परन्तु वह पट रूप कार्य कुछ तन्तुओं से पृथक् नहीं है, विलक्षण संस्थान को प्राप्त होने वाले तन्तुओं का नाम ही पट है। उसी प्रकार प्रमाण सिद्ध चेतन अचेतन ईश्वर इन तीनों का समुदाय रूप सत्य पदार्थ ही विलक्षण परिणाम को प्राप्त होकर कार्य रूप होने से जगत् कहाता है। तस्मात् कार्य और कारण दोनो सत्यही है असत्य नहीं ॥ २७ ॥

लोक में घट और मृत्तिका इन दोनों के वाचक शब्द भी भिन्न हैं, और इनकी बुद्धि भी भिन्न भिन्न ही होती है। तस्मात् कार्य कारण का भेद ही सिद्ध है, फिर अभेद कैसा? तहां कहते हैं, कि—सामान्य शब्द हुआ मृत्तिका, और विशेष शब्द हुआ घट, तहां ऐसा व्यवहार होता है, कि—यह घड़ा मिट्टी है, इस में वस्तु का नाम तो मिट्टी हुआ और अवस्था का नाम घड़ा हुआ, अब मिट्टी और उसके विशेषाकार से घड़ा कोई और ही द्रव्यान्तर है, यही बड़ा भ्रम है। क्यों कि? सामान्य और विशेष को अन्योन्याश्रय होने से सामान्य वस्तु गत विकार की अपेक्षा से विशेष कुछ द्रव्यान्तर नहीं हो सकता है, घट ऐसा व्यवहार और बुद्धितो अवस्था को लेकर भी हो सकते हैं। इस प्रकार अवयवि यह शरीर प्रकृति ही ठहरता है, और आदि अन्त वाला है इसी से यह आत्मा नहीं हो सक्ता है किन्तु आत्मा से भिन्न है ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेवमनेकैर्हेतुभिः प्रपञ्चस्याऽसत्त्वं साधितम्. तत्र शङ्का ननु, प्रपञ्चस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किं न स्यादिति तत्राऽऽह—विकार इति। ख्यायमानः प्रकाशमानोऽपि विकारः प्रपञ्चः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति तं विना निरूप्यः स्याच्चेत्तर्हि सोऽपि चित्समः स्याच्चिद्रूपेणाऽऽत्मना समः स्वप्रकाशो भवेत् तथा च सति सोऽप्यात्मवत्स्वात् एकरूपः स्यादित्यर्थः ॥ २९ ॥

कुत इत्यत इत्याह—नहीति। ननु, सत्यस्याप्यात्मनो जीव-ब्रह्मरूपं नानात्वमस्त्येव तत्राऽऽह—यद्येवं नानात्वं मन्यते तर्ह्य-विद्वान् कथं तर्हि तयोर्भेदव्यवहारः? उपाधिकृत इत्याह—नानात्व-मिति। तत्र छिद्रयोर्घटाकाशमहाकाशयोरिवेति परिच्छेदा-परिच्छेदे दृष्टान्तः। ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेत्यु-पाधिकृतविकारसद्भावे वा तयोर्बाह्यशरीरस्थवाय्वोरिवेति क्रियाभेदे ॥ ३० ॥

ब्रह्मण एव प्रपञ्चव्यवहारालम्बनत्वं दृष्टान्तेन स्पष्टयति-यथेति। क्रियाभिस्तत्तद्रचनाभिर्बहुधा कटककुण्डलादिरूपेण लौकिकवैदिकैर्वचोभिः अनेकधाऽऽरोपाहितैः ॥ ३१ ॥

नन्वहङ्कारस्य कथं ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वम्? तस्य स्वकारणभूतब्रह्मावरकत्वासम्भवादावरणे वा स्वस्यापि प्रकाशासम्भवादित्याशङ्क्य सदृष्टान्तमाह—यथेति। अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥"

इत्यादिवचनात्तस्मादर्कप्रभवः अर्केणैव दर्शितः प्रकाशितश्च

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वस्यैकस्यैव सृष्टत्वं पुनरसृष्टत्वं दृष्टम् इत्यतो दृष्टान्तमाह—ऊर्णनाभिरिति ऊर्णनाभिरिवेत्यर्थः ॥ ४१ ॥

यतः सर्वजगत्कारणभूतोऽतस्त्वामेव "कारणं तु ध्येयः" इत्यादि वेदार्थतात्पर्यज्ञा ध्यायन्तीत्याह—तस्येति । तस्य सृष्टिसंहारकर्तुरवितुः स्वावतारैः रक्षितुः चराचराणामन्तः प्रविश्य धारणेन नियन्तुश्च तव यत्पादमूलं तदेव भजामीत्युपरिष्टात् सम्बन्धः कथम्भूतं यस्माद्यदुपासनादित्यर्थः न कर्मगुणकालरजः स्पृशन्ति कर्मगुणकालानां रजोमलं यदुपासकान् न स्पृशन्ति रुज इति पाठे तथा कर्मादयो यदुपासकं न स्पृशन्ति यदुपासका कर्मादीन्न स्पृशन्तीति वा तत्र कर्म पुण्यपापात्मकं तस्य कर्मणो रजः रजोवद् ज्ञानावारकत्वात्सुखदुःखे गुणरजःशब्देन रजआदि गुणकार्यं कामक्रोधादिकं विवक्षितं कालशब्देन तत्प्रयुक्तशीतातपवर्षादयो विवक्षिताः रुज इति पाठे रुजो रोगाः किञ्च वेदहृदयाः वेदा हृदये येषां ते वेदतात्पर्यविद् मुनयः इत्यर्थः । यजन्त्याराधयन्ति तदाप्त्यै तत्पादमूलप्राप्त्यै ॥ ४२ ॥

किं तदाप्त्येत्यतः तस्या एव निरतिशयपुरुषार्थरूपतामाह, नान्यमिति । अभिय इति छेदः हे अपवर्गमूर्ते ! निरतिशयपुरुषार्थरूप ! हे ईश ! परितो न भीमेयं यस्मात्त्वदङ्घ्र्युपनयात्त्वदङ्घ्रिप्राप्तेरन्यं क्षेमं श्रेयो न विद्मः भिय इति छेदः परितोभियः इति समस्तं पदं जनस्य विशेषणं ननु, चतुर्मुखलोकप्राप्तेरपि क्षेमं प्रेक्ष्यत आह—आब्रह्मेति । अजं नितरां कालरूपस्य ते स्वसः बिभेति कुतः यतः सोऽपि द्विपरार्द्धधिष्ण्यः द्विपरार्द्धकालावस्थायिलोकः अतो बिभेतीति सम्बन्धः । यतो ब्रह्मण एवं भयं किमुत तत्कृतानां तत्सृष्टानां भौतिकानां भूतपरिणामरूपदेहभाजाम् ॥ ४३ ॥

यतस्त्वदङ्घ्र्युपनय एव क्षेमः अतस्त्वत्पादमूलमेव तत्प्राप्तये भजामीत्याह—तद्वा इति । कृतधियः सत्यसङ्कल्पस्य परमात्मनो गुरोश्च परस्य सर्वस्मात्परस्य च भवात्महितं तदेतत्पादमूलं भजामि कुतो नाभिय इत्यनेन "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" इत्युक्तविधसत्यसङ्कल्पत्वं विवक्षितम् आत्मगुरोरित्यनेनान्तः प्रविश्य नियमनेन साधुकर्मकारयितृत्वं ज्ञानोपदेशेन उपकर्तृत्वं च प्राप्यत्वोपयुक्ततयोक्तम् "हित्वेतरान्प्रभवतो भवितात्मगुरोः परस्य देहाद्यपार्थमसदन्त्यमभिज्ञमात्रम्" इति पाठे अत्यसदन्त्यमसदुष्टमपार्थं निष्फलं च देहादि हित्वा अपारयात्महितं पादमूलं भजामीति सम्बन्धः । हित्वेदमात्मच्छदिमात्मगुरोरिति पाठे तु आत्मच्छदिमात्मज्ञानावरकं देहादि हित्वा भजामीत्यर्थः । देहाद्यपार्थमसदन्त्यमभिज्ञमात्रमिति च क्वचित्पाठः तदा अपार्थमसदन्ति स न भवत्यभिज्ञमात्रम् यस्मात्सदेहादि हित्वेत्यर्थः ज्ञानशक्त्यादयो इत्यः यथैव नेत्रा यो भजेदिति शेषः । तर्हि स एव सर्वं मनीषितार्थमभिमतं सर्वं पुरुषार्थं विन्देत लभेत आद्यपाठे तु यस्येति शेषः । यस्य ते अभिज्ञमात्रं त्वत्पादमूलविषयकज्ञानमात्रमस्ति तर्हि स एव सर्वमनीषितार्थं विन्देत "विन्दन्ति ते सर्वमनीषितार्थम्" इति च पाठो दृश्यते तदाभिज्ञमात्रमित्युक्त्या वेदाभिज्ञा इत्यादिः ते विन्दन्ति सर्वम् इति सम्बन्धः ॥ ४४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आविष्कृतत्वं दर्शयति—मूर्त्तीति । हे भगवन् ! भक्तवत्सलस्य भगवत इमे मूर्त्तयो नरनारायणसंज्ञे त्रिलोक्याः क्षेमाय रक्षायै शत्रुकृतसन्तापनाशाय मृत्युजित्यै, संसाराख्यशत्रुजयाय भवतः किञ्च, त्वं नाना अनुपमान्यतनूर्नानाविधा अनुपमा असदृशीस्तन्वा अन्योन्यविराजत्तनूर्मूर्त्तीर्बिभर्षि त्रिलोकीक्षेमादिकार्यार्थेति शेषः । किञ्च, ऊर्णनाभिरिव इदं सर्वं यथापूर्वं सृष्ट्वा पुनर्यथापूर्वं ग्रससि अनेन मायाविकृतबहुरूपग्रहणं न चित्रं स्यादिति शङ्का परिहृता सत्यप्रपञ्चस्रष्टुरीश्वरस्य तन्नियमनार्थं तावद्रूपग्रहणोपपत्तेः "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः । यद्वा, अतनूरप्राकृतशरीरस्त्वं यथा सर्वमिदं सृष्ट्वा पुनर्ग्रससि तथानुपमानि नानाविधानि शरीराणि बिभर्षि ग्रससि अन्तर्गतानि करोषि । त्रिलोकीक्षेमोदये भरणं क्षेमाद्यनन्तरमेकीकरणमिति विशेषः भगवत इमे मूर्त्तीश्च तथेति ॥ ४१ ॥

एतमर्थं प्रमाणयति—तस्येति । यत्र यस्मिन्पादमूले स्थितं पुरुषं कर्मगुणकालरजः दुष्कर्मगुणाः सत्त्वादयः कालो जन्मादिहेतुः रजः आर्त्तवम् शुक्रशोणिताख्यम् एकवद्भावविवक्षयैकवचनं न स्पृशन्ति नोत्पादयन्ति न दुःखमापादयन्ति वेदस्य हृदयम् येषां ते वेदहृदयाः वेदतात्पर्यज्ञा मुनयो ब्रह्मादयः स्थिरचरेशितुरवितुः पालकस्य तव पद्धिमूले स्तुवन्ति "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति नितरां नमन्ति नमो विष्णवे महते करोमीति यजन्ति "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्" इति ध्यायन्त्यात्मानमेव लोकमुपासीत इति यद्यस्मात्त्वदङ्घ्रिसपर्या तदेवमानं वा इत्यर्थः । तस्य यदङ्घ्रिमूलं यत्र कर्मादयो न स्पृशन्ति तत्तव पादमूलं भजामीत्येकवाक्यं वा ॥ ४२ ॥

किमर्थमेतदेव स्तुवन्ति निर्दुःखसुखावाप्तये अन्यत्किं न स्यादिति तत्राह—नेति । हे ईश ! अपवर्गमूर्त्ते ! पुरुषार्थस्वरूप ! यस्त्वं परितोऽभयः सर्वस्मादभयः जनस्य त्वदङ्घ्र्युपनयात्त्वदङ्घ्रिशरणप्राप्तेरन्यत् क्षेमं न विद्मः परितो भिय इति वा पाठः जनस्येति विशेषणं सर्वस्माद्भीर्भयम् यस्य स तथा तस्य । ननु, स्वस्त्यः क्षेमकर्त्ता ब्रह्मास्ति "प्रजापते न त्वदेतान्यन्यः" इति श्रुतेः । तत्राह ब्रह्मेति यतः परितोभयः अतो द्विपरार्द्धसङ्ख्याधिष्ण्यं यस्य स तथा स ब्रह्मा कालरूपस्य ते तव सकाशाद्बिभेति "यन्मां निशम्य सदनादुरुकम्पमानम्, यो मत्कमात्तुरसं सभयं विलक्षमाणेषु" इति श्रुतेः । भूतग्रामस्य विचित्रसृष्टत्वात्कस्यचिन्निर्भयत्वोपपत्तेर्ब्रह्मणस्तु लोकविडम्बनत्वेन तथाभावः किं नस्यादिति मन्दाशङ्कां कैमुत्यन्यायेन परिहरति, किमुतेति । अत इत्युत्तरत्रापि सम्बध्यते ब्रह्माप्येवं बिभेति यतोऽत्यन्तकृतभौतिकानां तेन ब्रह्मणा कृतानि भौतिकानि शरीराणि येषां ते तथा तेषां प्राणिनां भयमस्तीति किमुतेत्यन्वयः ॥ ४३ ॥

सेवायामित्थं भावमाह—तद्वै इति । कृतधियः एकप्रकारबुद्धेर्निश्चलबुद्धेरित्यर्थः आत्मगुरोः जीवगुरोः परस्य परमात्मनस्तव पादमूलमनहंदेहाद्यभिमानं हित्वा यदि भजामि तर्हि ते तव प्रसादात्सर्वं मनीषितार्थं विन्देय इत्यन्वयः । कीदृशम्

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मच्छिदम् आत्मनाशहेतुम् अत एवापार्थं पुरुषार्थलक्षण- प्रयोजनशून्यम् असदभद्रम् मनाभिज्ञमात्रं केवलाज्ञाननिर्मितं केवलाविद्याकृतं वा अनेन देहेऽहंभावो भवहेतुस्तदभावो मुक्ति- हेतुरिति कथितं भवति ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तद्वै इति तैः अभिज्ञमात्रमित्यस्य टीकायामात्ममात्रमिति आत्म- न्यधिष्ठाने भ्रमादेव प्रतीतिर्यस्य तदित्यर्थः ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तस्मात् स्वभजनं कारयितुं भजनपरिपाके च तद्भक्त- प्रेमवशो भवितुं च तवावतारः न केवलमेतदेव निमित्तं जगत्पाल- नार्थमपीत्याह—मूर्ती इमे इति । मृत्युजित्यै मोक्षाय च यथा नाना ऽन्यतनूर्मत्स्यकूर्माद्या बिभर्षि तथेमामपि तनूं बिभर्षि किञ्च सृष्टा यस्य पालनार्थं तनूं बिभर्षि तत्सर्वं पुनर्ग्रससि च ऊर्णनाभि- रिवेत्यद्भुतं तव लीलावैभवमपीति भावः ॥ ४१ ॥

तस्य तवाङ्घ्रिमूलं भजामीति तृतीयश्लोकस्यस्यानुषङ्गः यत्स्थं यदङ्घ्रितलस्थं भक्तजनं कर्मगुणकालाः रजः दुराचार- त्वादिमयं मालिन्यं च न स्पृशन्तीति अद्भुतं तव भक्तिवैभव- मिति कर्मेति दुष्कृतं सुकृतं प्राचीनमर्वाचीनं वा कृतमपि न स्पृशतीति पुष्करपलाशे जलमिवेति भावः । बहुत्वमार्षं यद्भक्ता अभीक्ष्णं स्तुवन्ति मुनयो मौनशीला वेदहृदया वेदार्थतात्पर्यज्ञाः तत्प्राप्त्यर्थं ध्यायन्ति ॥ ४२ ॥

अङ्घ्र्युपनयात् चरणप्राप्तेरन्यत् क्षेमं कुशलं परितो भियः संसाराद्बिभ्यतो जनस्य न विद्मः यतो ब्रह्मेत्यादि ते कालस्य कालस्वरूपत्वात् इतः अस्मात् किमुत वक्तव्यं तत् कृतानां अब्जकृतानां भौतिकानां प्राणिनां भयमिति ॥ ४३ ॥

ऋतधियः सत्यज्ञानस्य आत्मच्छिदि हित्वा आत्माच्छादकं देहादि देहगेहादिममत्वं त्यक्त्वा अपार्थं निष्फलम् असत् तुच्छं अन्त्यं नश्वरम् एवमन्योपि यो भजति स ते त्वामभिज्ञमात्रं भक्त- सेवाभिज्ञमेव प्राप्नोति । ननु, तर्हि निष्काम एव मां भजतु सकाम- स्त्वन्यं तत्राह—तर्हीति । यदि त्वां विन्देत तर्हि सर्वमनीषितार्थं वाञ्छितार्थं विन्देतैव ॥ ४४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, प्राणप्रवर्तको भगवानास्तु तापसा किमत आह—मूर्ती इति । हे भगवन् ! नारायण ! इमे नरनारायणाख्ये मूर्ती भगवन् त्वाविर्हिते आविर्भावप्रयोजनमाह, त्रिलोक्याः क्षेमाय रक्षार्थं तापविरमाय त्रिविधतापनिवृत्त्यै मृत्युजित्यै संसारनिवृत्तये च अत्र दृष्टान्तमाह, यथैव विश्वमवितुमन्यतनूः मत्स्यकूर्मादिरूपाः भाव्याः बिभर्षि तद्वत् विश्वनिर्गमनप्रवेशस्थानत्वप्रतिपादनेन भग- वत्तां दर्शयति, सर्वं विश्वं सृष्ट्वा पुनर्ग्रससीति जगत्कारणत्वेपि निर्विकारित्वं दृष्टान्तेन द्योतयति ऊर्णनाभिरिति ॥ ४१ ॥

एवम्भूतस्य तवाङ्घ्रिं भजामीत्याह—तस्येति । तस्य अङ्घ्रिमूलं भजामीति तृतीयश्लोकादानीतेनाध्याहृतेन वा क्रियापदेनान्वयः तदाप्त्यै अङ्घ्रिमूलप्राप्तये ॥ ४२ ॥

अङ्घ्रिप्राप्तेरन्यत्क्षेमं नेत्याह—नान्यमिति । परितो भीर्यस्य तस्य जनस्य यद्वा, परितः सर्वत्र नास्ति भीर्यस्मात्तस्य तव अङ्घ्र्युप- नयात् श्रीमत्पादपद्मप्राप्तेः अन्यत्क्षेमं न विद्मः भगवच्चरणप्राप्ति- रेवोपादेयपदार्थ इति द्रढयितुं सर्वं ब्रह्मादिस्तम्बपर्यन्तं काल- ग्रस्तत्वादनुपादेयमित्याह, ब्रह्मेति । द्विपरार्धकालरूपायिधिष्ण्यं स्थानं यस्य सोपि ते तव शक्तिरूपस्य कालस्य वेगादिति- शेषः । अलं नितरां बिभेति तत्कृतभौतिकानां तेन कृतानां भौति- कानां प्राणिनां भयमिति का कथा ॥ ४३ ॥

तत्तस्मात् पादमूलप्राप्त्यर्थं ऋता धीर्यस्मात्तस्य तव धीप्रेर- कस्य वेदमात्रार्थभूतस्य आत्मनां ब्रह्मादिसर्वजीवानां गुरोः परस्य पूर्णस्य तव पादमूलं भजामि नन्वन्यासक्तस्य नो भजने- ऽधिकार इत्यत आह, हित्वेति । इदं दृश्यमानमैहिकम् अन्त्यं- पारलौकिकम् असदयुक्तम् अत एवापार्थं निष्फलम् आत्मच्छिदि आत्माच्छादकं हित्वा उपेक्ष्येत्यर्थः । भगवत्प्राप्तिकामो भग- वन्तं भजेदिति फलितोर्थः यदि क्षेत्रज्ञस्वरूपमात्रप्राप्तिकामः अर्थ- प्राप्तिकामो वा तर्हि ते त्वत्त एव अभिज्ञमात्रं क्षेत्रज्ञस्वरूप- मात्रं मनीषितार्थं वा विन्देतैव तद्दातापि त्वमेव नान्यः क्षेत्र- ज्ञस्य त्वदंशत्वात् अर्थस्य सर्वस्य त्वदचिच्छक्तिमयत्वादिति भावः ॥ ४४ ॥

---

### भाषा टीका ।

हे भगवन् ! आप इन दोनों मूर्त्तियों को इस त्रिलोकी के मंगल के लिये, और दुःख दूर करनेके लिये, तथा मोक्ष के लिये, धारण करते हो। तथा इस जगत् की रक्षार्थ और भी नानाप्रकार की मूर्त्तियों को धारण करते हो। और इस जगत् को रचकर ऊर्णनाभि (मकरी) की तरह फिर सबको ग्रस लेते हो ॥ ४१ ॥

जगत् के पालन करनेवाले स्थिर चरों के नियंता ऐसे आप के चरणकमल को मैं भजता हूं । जिस चरणकमल के समीप स्थित रहनेवाले पुरुष को कर्म गुण काल और रजो- गुण ये सब स्पर्श नहीं कर सके हैं । और वेद के अभिप्राय जाननेवाले मुनि लोग जिन आप के चरणकमलों की प्राप्ति के अर्थ उनही चरणकमलों की स्तुति करते हैं, नमस्कार करते हैं, पूजन करते हैं, और निरन्तर ध्यान करते हैं ॥ ४२ ॥

हे ईश ! अपवर्ग मूर्त्ति जो आप हो तिन आप के चरणार- विंद की प्राप्ति को छोड़कर सर्वत्र भयभीत इस जन को और भी कोई क्षेम है इस बात को मैं नहीं जानता हूं । द्विप- रार्द्ध पर्यंत स्थित रहनेवाले ब्रह्माजी भी जिन आप के भृकुटी विलासरूप काल से अत्यन्तही डरते हैं । और जो विचारे ब्रह्मा की सृष्टि के प्राणी हैं उनको भय होवे इसमें क्या आश्चर्य है ॥ ४३ ॥

सत्त्वं रजस्तम इतीश ! तवात्मबन्धो ! मायामयाः स्थितिलयोदयहेतवोऽस्य ।
लीलाधृता यदपि सत्त्वमयी प्रशान्त्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥
तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजन्ति ।
यत्सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥ ४६ ॥
तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे [१]परदैवताय ।
नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥
यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ।
[२]तन्माययाऽऽवृतमतिः स उ एव[३]साक्षादाद्यस्तवाऽखिलगुरो[४]रुपसाद्य वेदम् ॥ ४८ ॥
यद्दर्शनं निगम आत्मरहः प्रकाशं मुह्यन्ति यत्र कवयोऽजपरा यतन्तः ।
तं सर्ववादविषयप्रतिरूपशीलं [५]वन्दे महापुरुषमात्मनि गूढबोधम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां द्वादशस्कन्धे नारायणस्तवो नाम
अष्टमोऽध्यायः ॥ ८ ॥

### भाषा टीका ।

आत्मा के आवरण करनेवाले तुच्छ नाशवान् इस देहादि में आसक्ति छोड़कर, सत्य संकल्प आत्मा के अज्ञान को दूर करनेवाले, ज्ञान स्वरूप परात्पर ऐसे आप के चरणकमल को मैं भजता हूं ॥ यदि पुरुष आप का भजन करता है तब वह आपही से संपूर्ण वांछितार्थ को प्राप्त हो जाता है ॥ ४४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, ब्रह्मरुद्रावपि ममैव मूर्ती अतो मामेव किमत्यन्तमाश्रियसे तत्राऽऽह—सत्त्वमिति । यद्यपि यद्यपि तवैव मायया कृता एता लीलास्त्वयैव धृतास्तथापि या सत्त्वमयी सैव प्रशान्त्यै मोक्षाय न केवलमस्य प्रशान्त्यभावमात्रमन्यभजने किन्त्वनिष्टं च भवेदित्याह—व्यसनेति ॥ ४५ ॥

तदेव सदाचारेण द्रढयति—तस्मादिति । हे भगवन् ! तव शुक्लां तनुं श्रीनारायणाख्याम् अथ तावकानां च शुक्लां तनुं नराख्याम् यस्मात्सात्वताः सत्त्वमेव पुरुषस्येश्वरस्य रूपमुशन्ति मन्यन्ते न त्वन्यत्रजस्तमश्चेति अत्र हेतुः यतः सत्त्वाल्लोको वैकुण्ठाख्यः लोकत्वे सत्यभयम च मोक्षे सत्यभयमात्मसुखं च ॥ ४६ ॥

अतस्तं प्रणमति—तस्मै नम इति । हंसाय शुद्धाय संयतगिरे नियतवाचे अथ च निगमेश्वराय वेदमार्गप्रवर्तकाय ॥ ४७ ॥

वेदार्थसम्प्रदायप्रवर्तने हेतुत्वं वदन्स्तौति—यमिति । वितथाक्षपथैः कपटेन्द्रियमार्गैर्भ्रमन्ती विक्षिप्ता बुद्धिः पुमान् स्वेन्द्रियादिषु नियन्तृत्वेन सन्तमपि यं त्वां न वेद दृक्पथेषु विषयेषु बुद्धिविक्षेपे हेतुः तन्मायया तस्य तवैव मायया आवृता आत्मनिष्ठा मतिर्यस्य स उ सोऽपि आद्य एव पूर्वमविज्ञानेऽखिलगुरोस्तव त्वत्प्रवर्तितं वेदमुपसाद्य प्राप्य तं त्वां साक्षाद्वेद ॥ ४८ ॥

वेदेनैव त्वज्ज्ञानमित्युपपादयन्प्रणमति—यस्य तव दर्शनं निगमे भवति कथम्भूतम् ? आत्मनस्तव रहः रहस्यं तस्य प्रकाशकम् अन्यथा दुर्बोधतामाह—अजपरा ब्रह्ममुख्याः कवयोऽपि साङ्ख्ययोगादिभिर्यतमाना यत्र त्वयि मुह्यन्ति कुतः ? इत्यत आह, सर्वेषां साङ्ख्यादिवादिनां ये वादास्तेषां विषया भेदाद्वयस्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम् । कुतः ? आत्मना देहादिसङ्घातेन निगूढो बोधो यस्य तम् एवम्भूतं महापुरुषं त्वां वन्दे ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मायामयाः प्रकृतिसम्बन्धिन्यस्तनव इत्यध्याहारः शुक्लां तनुमित्यनन्तरश्लोके । लीलाधृता लीलया धृता अन्ये रजस्तमसी न प्रशान्त्यै याभ्यां व्यसनादिः स्यात् ॥ ४५ ॥

यत्सत्त्वं ते रूपं सात्वता उशन्ति तल्लोकाय आत्मज्ञानाय ज्ञानप्रदमित्यर्थः ॥ ४६ ॥

---

(१) परदेवताये (२) त्वन्मायया (३) साक्षाद्य: (४) उपपद्य (५) वन्दामहे इति विज० पा० ।

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मसुखम् आत्मानुभवमेव चाभयं नान्यत् अन्यत् सुखं सर्वाभयमित्यर्थः ॥ ४७ ॥

यं वै इति वितथाल्पथैः भ्रमद्भिः धीभिरिन्द्रियैः विषयेषु भ्रान्तमनाः जन्तुः सर्वपदार्थेषु सन्तमपि न वेद तं त्वामन्यो विलक्षणाधिकारी तवाङ्घ्रिमुपसाद्य त्वां वेद भजाङ्घ्रिमित्यध्याहारेण योजना । यद्वा, अखिलगुरोरिति द्वितीयार्थे षष्ठी ॥ ४८ ॥

यद्दर्शनमिति यस्य दर्शनोपायभूतो वेदः आत्मरहः प्रकाशमिति निगमविशेषणम् अजो ब्रह्मा येषां परस्तेऽजपराः निगूढबोधं अपरिच्छेद्यज्ञानवैभवम् ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये श्रीसुदर्शनसूरिकृतशुकपक्षीये अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, ब्रह्मरुद्रावपि ममैव मूर्ती अतस्तौ हित्वा मामेव किमिति भजसि इत्यत आह—सत्त्वमिति । हे ईश ! हे आत्मबन्धो ! जीवसख ! यदपि यद्यपि अस्य जगतः स्थितिलयोदयहेतवः तव विष्णुरुद्रब्रह्मतनव इति विशेष्यमध्याहर्तव्यं शुक्लां तनुम् इत्यग्रे दर्शनाच्चाश्च सत्त्वं रजस्तम इति या तव माया तयैव कृताः लीलाधृताः लीलयैव धृता लीलापदेन विष्णवाख्यतनुसम्बन्धस्य कर्ममूलत्वव्यावृत्तिः तथापि तत्र सत्त्वमयी या तनुः सैव नृणामुपास्यमाना शान्त्यै मोक्षोपयुक्तशान्तये भवति नान्येऽन्ये ब्रह्मरुद्राख्ये तन्वौ न प्रशान्त्यै भवतः प्रत्युत ताभ्याम् उपास्यव्यसनमोहभियो भवेयुः व्यसनं दुःखं भीभयं यद्यप्यत्र स्थितिहेतुभूताया विष्ण्वाख्यतनोरपि मायाकृतत्वोक्त्याऽप्राकृतसत्त्वगुणपरिणामरूपत्वमवगम्यते तथ "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति भगवद्विग्रहे प्रतिषिद्धं तथाप्यत्र सत्त्वमिति या माया रजस्तमश्चेति च या माया ताभ्यां मायाभ्यां कृता इति योज्यम् तत्र सत्त्वशब्देन स्वसत्तामात्रं सत्त्वं गुणसत्त्वाद्विलक्षणमित्युक्तं शुद्धसत्त्वमयं त्रिगुणात्मकप्रकृतिद्रव्यविलक्षणं विवक्षितम् इत्थं योजनार्थमेव सत्त्वं रजस्तम इति व्यस्तनिर्देशः कृतः अन्यथैकमेव "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते" इत्यत्रापमेवार्थः रजस्तमःशब्दाभ्यां सत्त्वमिश्रौ तौ विवक्षितौ ॥ ४५ ॥

यतः सत्त्वमय्येव प्रशान्त्यै न त्वन्ये तस्मात्त्रिगुणत्वपरतामेव उपासते तस्मादिति । अथ ननु, हे भगवस्तावकानां त्वद्भक्तानां स्वकीया स्वस्य तव च दयिता शुक्लां शुद्धसत्त्वमयीं तनुं कुतया भजन्ति कासौ शुक्ला तव तनुरित्यत्राह, धरत्वात्वताः पुरुषरूपमुपासते सत्त्वं लोका इति सात्वताः पञ्चरात्रसिद्धान्ततत्त्वाभिज्ञा लोका जना नरनारायणाख्यं यत्पुरुषरूपं पुरुषाकृत्यावस्थितं रूपं पुरुषस्य तव रूपं वा सत्त्वं विशुद्धसत्त्वमुपासते उपास्यत्वेनेच्छन्ति सैव शुक्ला तनुरित्यर्थः । तद्धि- धितर्हि—यतः पुरुषरूपात्सत्त्वादुपास्यमानादभयं सम्भूतिमयाभावः

उतापि चात्मसुखम् आत्मानुभवसुखं न चान्यदन्यद्भयमिश्रसुखं नास्ति ॥ ४६ ॥

इत्थमनन्तकल्याणगुणगणं स्तोतुमहं न शक्नोमीत्यभिप्रेत्योपस्थितैर्गुणैर्विशिषन् प्रणमति—तस्मा इति । पुरुषाय पुरुषिणोसि ददासीति तथा चतुर्विधपुरुषार्थप्रदायेत्यर्थः । भूम्ने सर्वान्तरात्मत्वेन भूमगुणविशिष्टाय त एव विश्वाय विश्वरूपेणावस्थिताय अत एव विश्वगुरवे विश्वस्य हितकराय आत्मनः शरीरिहिताचरणशीलत्वादिति भावः । परदेवतायै इत्यनेन ततोऽधिकदेवतान्तरव्यावृत्तिः नारायणायेत्यनेन प्राबल्यं प्रापकत्वं च विवक्षितम् ऋषय इत्यनेन सर्वज्ञत्वं नारायणपदसमभिव्याहृतनरोत्तमशब्देन शिष्याचार्यरूपेणाखिलाध्यात्मविद्याप्रवर्तनद्वारा जगदुज्जीवयितृत्वं विवक्षितम् । हंसायेत्यनेन अशेषनिराकर्तृत्वं संयतगिर इत्यनेन "सर्वमिदमभ्यात्तोऽवाक्यनादर" इत्यत्रैव परिपूर्णताप्रयुक्तमजल्पाकत्वं निगमेश्वरायेत्यनेन वेदाऽऽचार्यत्वं च विवक्षितमिति ॥ ४७ ॥

ननु, त्वम् इव माम् इत्थं भूतं सर्वेऽपि किं न विदन्ति अतआह यं वा इति । त्वन्माययाऽऽवृता धृतिर्यस्यात एव वितथैर्निरर्थकैरल्पथैरिन्द्रियमार्गैर्भ्रमन्ती धीर्यस्य सः देहात्माभिमानिनी धीर्यस्येत्यर्थः भ्रमद्भिरिति पाठे विषयप्रावण्येन चलद्भिर्वितथाल्पथैः त्वां न वेद कथम्भूतमपि स्वकेषु स्वेन्द्रियादिषु स्वकेष्वसुषु प्राणेषु हृदि हृदये स्वकपथेषु विषयेषु नियन्तृतया सन्तमपि तर्हि न कोऽपि वेदेत्यत आह—यं त्वखिलगुरोराद्यः प्रथमं त्वत्प्रवर्त्तितः यः तं वेदमुपसाद्य स्थितः इति शेषः स तु एव साक्षात् त्वां साक्षाद्वेद वेदान्तविहितोपासनाविशुद्धमनसा वेदेत्यर्थः ॥ ४८ ॥

वेदेनैव ज्ञानमित्युपपादयन्प्रणमति—यद्दिति । यस्य दर्शनोपायभूतो निगमो वेद आत्मरहस्यप्रकाशकः अन्यथा दुर्दर्शनमाह—अजपरा इति । अजो ब्रह्मा परः उत्कृष्टः प्रधानो येषां ते ब्रह्ममुख्याः कवयो यत्नतः साङ्ख्ययोगाद्भिर्यतमाना अपि । यद्वा, हिरण्यगर्भकपिलादयः योगसाङ्ख्ययोर्विज्ञप्रणयनेन स्वस्वरूपावमर्शनाय यतमाना अपि यत्र त्वयि विषयभूते मुह्यन्ति तमित्थंभूतं सर्ववादविषयप्रतिरूपशीलं सर्वेषां वादा योगसाङ्ख्यादिवादाः प्रकृत्युपादानत्वपुरुषनिमित्तत्वादिवादास्तेषां प्रतिक्षेपकं रूपं स्वरूपं शीलं स्वभावः सार्वज्ञसर्वशक्तित्वादिः प्रकृतिपुरुषाद्विलक्षणमिति यस्य तमात्मनि स्वस्मिन् गूढस्तैरविज्ञातः बोधः अपरिच्छेद्यज्ञानवैभवो यस्य तं महापुरुषं वन्दे ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् अष्टमोऽध्यायः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बद्धहंभावस्य निमित्ते रजस्तमसी तदभावस्य सत्त्वं त्वं भजतामिति भावेनाह—सत्त्वमिति । हे ईश ! आत्मबन्धो ! सत्त्वं रजस्तम इति गुणास्त्वया लीला धृताः जगन्निर्माणक्रीडायै धृताः अङ्गीकृताः । ननु, जीववल्लिङ्गं किं कुर्वन्ति यैन धार्याः स्युरिति तत्राह, स्थितीति । अस्य जगतः स्थित्यादिहेतवः किमात्मका इति तत्राह, मायामया इति । इच्छात्मकाः यद्यपि यद्यपि

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तथापि सत्त्वमयः सात्त्विकः प्रशान्त्यै मुक्तये भवति अन्ये राजसतामसाः प्रशान्त्यै न स्युः किन्तु देहाहंभावेन संसाराय स्युरित्यर्थः । यद्वा, सत्त्ववदन्ये रजस्तमसी शान्त्यै न स्यातां पुनः कस्मै भवत इति तत्राह, नृणामिति । याभ्यां रजस्तमोभ्यां नृणां व्यसनादयः स्युः च एवार्थे त्रिविधानां नृणां मध्ये सत्त्वमय एव इति वा ॥ ४५ ॥

उपसंहरन्नेव सत्त्वं स्तौति—तस्मादिति । यस्मात्सत्त्वमेव निःश्रेयसहेतुस्तस्मादिह कुशलाः भगवतः कल्याणानां तावकानाम् उपासायोग्यां सतो दयितां शुक्लां तव तनुं भजन्ति तावकानामिति किं विशिष्योच्यत इति तत्राह, सात्वता इति सात्वताः साधुगुणयुक्ताः पुरुषाः सत्त्वं सत्त्वगुणप्रवर्तकं पुरुष इति रूपं शब्दो यस्य तत्तथा पुरुषशब्दवाच्यमित्यर्थः उशन्ति कामयन्त इति यद्यस्मात्तस्माद्विशेषवचनम् यतः पुरुषरूपात् लोकोऽभयं विन्दति आत्मसुखमपि लभते तस्मादन्यदभयादिह न बद्धा, यतः सत्त्वाल्लोको रक्षितो भवति अभयमृतात्मसुखमाप्नोति अन्यद्रजस्तम इति यद्वक्ष्य. स्वरूपसुखादिहेतुर्न भवति ॥ ४६ ॥

निरन्तरध्यानासमर्थस्योपास्तिप्रकारमाह—तस्मा इति । विश्वाय विश्वनाम्ने अस्य सर्वनामसंज्ञा नास्ति अर्थान्तरत्वात्प्रेक्षया धीरत्वेन संयतगिरे मितभाषणाय ॥ ४७ ॥

भवत्साक्षात्कारो भवत्प्रसादायत्तो न स्वप्रयत्नसाध्य इत्याह, यमिति । हे वितत ! यः पुरुषोऽक्षपथैः शब्दादिभिः भ्रमद्धीः त्वां न वेद कीदृशं स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि दृक्पथेषु इन्द्रियविषयेषु चरन्तं निर्दोषत्वेन वर्तमानं ज्ञापकाभावात्र जानन्तीति नेत्याह, तवेति । अखिलगुरोस्तव वेदं ज्ञापकप्रमाणम् उपपद्यापि सः सांसारिकः(?) अदृष्टयोग्यः विषयभोगशीलः अस्य तव मायया बन्धकशक्त्या आवृतमतिः आच्छादितज्ञानकलकः(?) स्वत्प्रसादेन त्वज्ज्ञानसुखमित्यर्थः ॥ ४८ ॥

त्वज्ज्ञानस्य किं माहात्म्यं येन त्वदनुग्रहेण लभ्यमानं(?) स्यादिति तत्राह—यद्दर्शनमिति । यस्य तव दर्शनं ज्ञानं निगमे सर्वनिर्णायके वेदे प्रतिपादितम् आत्मरहःप्रकाशो यस्मात्तथा तत्र भजपराः विष्णुपरायणाः यतन्तः कृताधिकप्रयत्नाः कवयो यत्र परमात्मरहस्ये मुह्यन्ति इदमित्थमिति ज्ञातुम् उपदेष्टुं च न शक्नुवन्ति तं भगवन्तं वन्दामहे इत्यन्वयः । सर्ववादानां सर्वसिद्धान्तानां विषयाणां प्रतिपाद्यानाम् अर्थानां प्रतिरूपशीलं(?) विरुद्धस्वभावं तदुक्तान्यथास्थितस्वभावमित्यर्थः आत्मनि जीवविषये गूढवान् जीवेनाज्ञानस्वरूपमित्यर्थः । आत्मना स्वेनेति वा ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टमोऽध्यायः ॥ ८ ॥
( विजयध्वजतीर्थीयटीका समाप्ता )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सत्त्वं रज इति द्वयम् ॥ ४५–४७ ॥

यं वै इति । स्वखेषु स्वेन्द्रियेषु सन्तमपि एषामेव विवरणम् असुषु कर्मेन्द्रियेषु दृक्पथेषु ज्ञानेन्द्रियेषु हृदुभयात्मके "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीतोपनिषद्वचः ॥ ४८—४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, सकामत्वे सति कथं नारायणमपि भजतु तत्भजनमपि भजनमेव यतो देवा मन्मूर्तय एव ते इति तत्राह—सत्त्वमिति । आत्मबन्धो ! हे प्राणनाथ! अस्य इन्द्रचन्द्रादि देवमनुष्यादिमयस्य जगतः स्थित्यादिहेतवः सत्त्वादयो गुणास्तेऽपि मायामया एव किं पुनस्तत्कार्याणि इन्द्रादयो नश्वरास्तेषां भजने मायातीतं त्वां कथं विन्दतीति भावः । भवत्यासु लीलासु मध्ये सत्त्वमयी लीला प्रशान्त्यै भूता न त्वन्ये रजस्तमोमय्यौ याभ्यां व्यसनमोहभियो भवन्ति तदप्येतास्तिस्रोऽपि लीला मायामय्य एवेत्यन्वयः ॥ ४५ ॥

अतस्तव मायामयीमिन्द्रादिमूर्तिमशुद्धां विहाय शुद्धसत्त्वस्वरूपा एव तव तद्भक्तानां च मूर्तीरभिज्ञा उपासते इत्याह, तस्मादिति यत् यतः सात्वता नारदाद्याः पुरुषरूपं विष्णुस्वरूपं सत्त्वम् उशन्ति । ननु, कीदृशं सत्त्वं तत्राह, यतो लोकः किं स्वर्गादिकः न यत्र अभयं पातहेतुकभयाभावः आत्मसुखम् आत्मभूतं सुखं च ननु कर्मफलं स लोको वैकुण्ठो यतस्तत् शुद्धसत्त्वं न त्वन्यत् प्राकृतं सत्त्वम् ॥ ४६ ॥

पुरुषाय पुरुषाकारत्वेऽपि भूम्ने सर्वव्यापकाय तदपि विश्वाय देवमनुष्यतिर्यगादिसर्वरूपाय आविर्भावप्रयोजनमाह—विश्वगुरवे भक्तिज्ञानवैराग्याण्युपदेष्ट्रे न केवलमुपदेष्टा स्वयमपि तु भजनीयश्चेत्याह, परदेवतायै अभीष्टदेवाय आश्रयभक्तवत्सलत्वमाह, ऋषये ऋषिस्वरूपनारायणाय ऋषिस्वरूपनरोत्तमाय च स्वकपरिग्रहत्वमाह हंसाय मौनशालित्वमाह संयतगिरे तदपि निगमेश्वराय वेदप्रवर्तकाय ॥ ४७ ॥

सर्वदुर्ज्ञेयत्वमाह—यं वै इति । वितथाक्षपथैः कपटेन्द्रियमार्गैः भ्रमद्धीः भ्रान्तबुद्धिः पुमान् स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि नियन्तृत्वेन सन्तमपि यं त्वां न वेद सर्वप्रत्यक्षात्मनय दृक्पथेषु सन्तमपि त्वां तन्मायया तव प्रसिद्धया मायया आवृतमतिर्न वेद अन्येषां का वार्ता ? स उ प्रसिद्धः आद्यो ब्रह्मापि तेऽखिलगुरोः साक्षाद्वेदमुपसाद्य प्राप्यापि त्वां नैव वेद ॥ ४८ ॥

वेदप्राप्तत्वेऽपि दुर्ज्ञेयत्वमाह—यस्य तव दर्शनं ज्ञानं निगमे वेदशास्त्र एव, कीदृशम् आत्मनस्तव रहस्यस्य प्रकाशकं

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, तर्हि वेददर्शिन एव मां जानन्तु, तत्र नेत्याह, मुह्यन्तीति । यत्र वेदे अजपराः अजो ब्रह्मा परः श्रेष्ठो येषां ते मुनयोपि यजन्तोपि भवत्तत्त्वाज्ञानान्मुह्यन्ति निगमस्य परोक्षवादित्वाद्दुर्बोधत्वमिति भावः । अत एव हेतुगर्भं विशिनष्टि–सर्वे वादा विवादादयो निगमोक्तास्तेषां विषयाश्च तेषां प्रतिरूपमेव नत्वनुरूपं शीलं चरित्रं यस्य तम् अत एवा त्मन्येव गूढो गुप्तीकृतो बोधः स्वतत्त्वं येन तम् ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

द्वादशेऽत्राष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, ब्रह्मशिवयोरपि भवन्मूर्तितया भजनीयत्वे सत्यहमेवैको भजनीयः कुतः ? इत्यत्राह–सत्त्वमिति । ईश ! हे सर्वनियन्तः! आत्मबन्धो ! आत्मनां ब्रह्मादीनामंशभूतानां बन्धुः आश्रयः असि तस्य सम्बोधने हे आत्मबन्धो ! अस्य विश्वस्य यथायथं इतवः सत्त्वं रजस्तम इति यद्यपि तव मायामय्यः लीलाः लीलोपात्तया मूर्तयः मायामयः यद्यपि यद्यपि तवैव त्वयैवांशाभ्यां स्वतश्च धृताः तथापि सत्त्वमयी प्रशान्त्यै मुक्तये भवति, नान्ये रजस्तमोमय्यौ शान्त्यै न भवत इत्यर्थः । प्रत्युत याभ्यां नृणां व्यसनादयो भवन्ति सत्त्वमयीत्यनेन स्थित्यर्थं सत्त्वगुणप्रवर्तनपरा अप्राकृतसत्त्वमयी बोध्या ननु प्राकृतसत्त्वगुणकार्यभूतेति बोध्यम् "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इत्यादि वचनात् माया मया इति श्रियो यान्तीतिवदुक्तम् ॥ ४५ ॥

यस्मादेवं तस्मात् हे भगवन् ! इह भजनभूमौ स्वदयिता भगवत्प्रियाः तावकानां भवदीयानां च दयिता शुक्लां शुद्धां तमःशब्दवाच्यप्रधानविलक्षणां तव तनुं कुशलाः भजन्ति, यत् यतः सात्वताः सत्त्वं शुद्धमप्राकृतं सत्त्वं पुरुषस्य परमपुरुषस्य रूपं विग्रहम् उशन्ति मन्यन्ते भजनफलमाह यतः शुक्लतनुभजनतः भजनकाले एव आत्मसुखम् अत्र "ब्रह्मसमश्नुते" इति ध्येयप्राप्तिसुखम् अभयं सर्वतो हि भयाभावः चरमकलेवरत्यागानन्तरं लोको भगवल्लोको लभ्यते अन्यत्संसारो नेत्यन्वयः ॥ ४६ ॥

नमस्करोति–तस्मायेति ॥ ४७ ॥

नन्वेवम्भूतमन्यः कुतो न जानातीत्यत आह–यमिति । वितथाक्षपथैर्निरर्थकैरिन्द्रियमार्गैर्भ्रमन्ती भ्रमन्ती धीर्यस्य सः यत्तवन्मायया आवृता मतिर्यस्य सः सदेहात्माभिमानीयं स्वकेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि नियन्तृतया प्रवर्तमानं त्वां हृत्पद्मेऽपि सन्तं न वेद किं बहुना उ प्रसिद्धो यः स आद्यो ब्रह्मापि साक्षात्स्वातन्त्र्येण नैव वेद पुनः अखिलगुरोस्तव वेदमासाद्य वेदेति योजना ॥ ४८ ॥

वेदद्वारा यत्किञ्चिद्ब्रह्मापि जानातीत्युक्तमिदमवच्छिन्नतया तु ब्रह्मादयो नैव त्वां जानन्ति तं त्वां वन्दे इत्याह–यदिति । यस्य तव दर्शनं ज्ञानं निगमे एव कीदृशम् आत्मरहः प्रकाशम् आत्मनः परमात्मनस्तव रहस्यप्रकाशकम् यत्र दर्शने त्वयि वा अजपराः ब्रह्मप्रधानाः यतन्तोपि मुह्यन्ति अत एव सर्वे विवादाः हैरण्यगर्भपाशुपतादयस्तेषां ये विषयास्तत्प्रतिरूपं प्रतिकूलं नत्वनुकूलं शीलं यस्य तत्त्वम् आत्मन्येव गूढो बोध इत्यवानवच्छिन्नज्ञानवैभवलक्षणः प्रबोधो यस्य तं महापुरुषं वन्दे ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे

अष्टमाध्यायार्थप्रकाशः ॥ ८ ॥

---

भाषा टीका ।

हे ईश ! हे आत्मा के सखा ! इस जगत् के पालन संहार और उत्पत्ति करने वाली अपनी इच्छामय सत्त्व रज और तम ये तीन प्रकार की तनुओं को आप लीला से ही धारण करते हो, परन्तु उनके मध्य में सत्त्वमयी जो विष्णुतनु है वही मोक्ष देने के लिये समर्थ है, और जो रजोगुणी तमोगुणी ब्रह्मा महादेव रूप दो तनू हैं, वे नहीं । सो इतना ही मात्र नहीं, कि–उन दोनों के भजने से शांति मात्र का अभाव है, किंतु उनके भजने से अनिष्ट भी होता है, क्योंकि ? व्यसन मोह और भय ये भी उनही के भजने का फल होता है ॥ ४५ ॥

तस्मात् हे भगवन् ! इस संसार में जो कुशल जन हैं वे आप की जो शुद्ध सात्त्विक नारायणाख्य तनु है, और भवदीयन के मध्य में जो शुद्ध सात्त्विक नराख्य तनु है तिन ही का भजन करते हैं, क्योंकि–वो ही उनको प्रिय लगती है । और उसमें कारण यह भी है, कि–जो सात्वत (पंचरात्र) निष्ठ भागवत हैं, वे सत्त्व को ही परम पुरुष का रूप मानते हैं और रज तम को नहीं । क्यों कि ? जिस सत्त्व से वैकुण्ठ लोक की प्राप्ति और अभय तथा आत्मसुख की भी प्राप्ति होती है ॥ ४६ ॥

षड्गुण परिपूर्ण, भूमा पुरुष, विश्वरूप, विश्व के गुरु, परम देवत, शुद्धस्वरूप, नियतवाणी वाले, निगमके ईश्वर, ऐसे श्रीनारायण और नरोत्तम जो आद्यऋषी दोनों आप हैं, तिन आप को नमस्कार हो ॥ ४७ ॥

असत् इन्द्रियों के मार्गों से विक्षिप्त बुद्धि वाले, और आप की माया से आवृत मति वाले, पुरुष अपने हृदयाकाश में, प्राणों में नेत्रों में आप के वर्तमान होने पर भी जिन आप को नहीं जानते हैं । तथा आपकी माया से विमोहित बुद्धिवाले साक्षात् ब्रह्माजी भी अखिल गुरु जो आप ही तिन से वेदों को प्राप्त होकर के ही ज्ञाता हुए हैं ॥ ४८ ॥

बड़े २ यत्न करने वाले ब्रह्मा प्रभृति ज्ञानी लोग जिस वेद के विषय में मोह को प्राप्त होते हैं वही वेद जिन

भाषा टीका।

आपके रहस्य का प्रकाश करने वाला और जिन आपके यथार्थ ज्ञान कराने वाला है, तिन महापुरुषों को मैं वन्दन करता हूं । आप कैसे हैं ? कि—सर्व वाद के विषय के अनुकूल स्वभाव वाले हैं अर्थात् जो जैसे निरूपण करें उसको उसी के अनुकूल भान होने वाले हो, फिर आप कैसे हैं, कि ? आप ने ही अपने बोध को अर्थात् स्वविषयक ज्ञान को नितराम् अत्यंत गूढ करके रखा है, कि—जिसमें आसुर प्रकृति वाले आपको न जान सकें ॥ ४९ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में आठवें अध्यायकी,

श्रीवृन्दावनस्थ पं० भागवताचार्यकृत

भाषा टीका समाप्ता ॥ ८ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

—:o:—

सूत उवाच ।

संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता ।
नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥

श्रीभगवानुवाच ।

भो भो *ब्रह्मर्षिवर्योसि सिद्ध आत्मसमाधिना ।
मयि भक्त्याऽनपायिन्या तपःस्वाध्यायसंयमैः ॥ २ ॥
वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया ।
वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥

ऋषिरुवाच ।

जितं ते देवदेवेश! प्रपन्नार्तिहराच्युत! ।
वरेणैतावताऽलं नो यद्भवान् समदृश्यत ॥ ४ ॥
गृहीत्वाऽजादयो यस्य श्रीमत्पादाब्जदर्शनम् ।
मनसा योगपक्वेन स भवान् मेऽक्षगोचरः ॥ ५ ॥
अथाप्यम्बुजपत्राक्ष ! पुण्यश्लोकशिखामणे ! ।
द्रक्ष्ये मायां यया लोकः सपालो वेदसद्भिदाम् ॥ ६ ॥

सूत उवाच ।

(१)इतीडितोऽर्चितः काममृषिणा भगवान् मुने! ।
तथेति स स्मयन् प्रागाद्बदर्याश्रममीश्वरः ॥ ७ ॥
तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः ।
वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

नवमे भगवन्मायां दिदृक्षोर्दर्शने मुहुः ।
मायाशिशोर्वपुष्यब्धौ च मुनेर्निर्वेशनिर्गमौ ॥

भगवतः परितोषपूर्वकं तदपेक्षितवरदानं कथयितुमाह, संस्तुत इत्यादिना ॥ १ ॥

आत्मसमाधिना चित्तैकाग्र्येण ॥ २ ॥

वयं ते परितुष्टाः स्मेति बहुवचनं सर्वदेवाभिप्रायेण वरदेशादित्येकवचनं द्वयोरैक्याभिप्रायेण प्रतीच्छ गृहाण ॥ ३ ॥

वरेण छन्दयता त्वया जितमुत्कर्षो दर्शितः मम तु वराकाङ्क्षा नास्तीत्याह, वरेणेति ॥ ४ ॥

यस्य तव श्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा प्राप्य कृतार्था अजादयो भवन्ति स भवान्मेऽक्षगोचरो जातोऽस्ति किमतः परं वरेणेत्यर्थः ॥ ५ ॥

द्रक्ष्ये द्रष्टुमिच्छामि लोकपालैर्ब्रह्मादिभिः सहितोऽयं लोको जनो यया सद्भिदां सति वस्तुनि भेदम् ॥ ६ ॥

---

*ब्रह्मर्षिवर्योऽसीति वीर० विज० पा० (१) इतीरित इति वि० पा०

### श्रीधरस्वामिकृतभावार्थदीपिका ।

तथेति द्रक्ष्यसीति स ईश्वरः स्मयन् प्रागात् पाठान्तरे क्रियाविशेषणम् ॥ ७ ॥

तमेवार्थं मायादर्शनरूपम् अन्वाविमृशंस्तु ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५ ॥

मायाम् आश्चर्यशक्तिम् ॥ ६—१२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं संस्तुतस्तदभिमतं पप्रच्छेत्याह—संस्तुत इत्यादिना । हे भृगूद्वह ! द्वितीयान्तपाठे भृगूद्वहं मार्कण्डेयमित्याह ॥ १ ॥

उक्तिमेवाह—भोभो इति द्वाभ्याम् । आत्मसमाधिना चित्तैकाग्र्येणानपायिन्याऽविच्छिन्नया मयि भक्त्या च तप आदिभिश्च सिद्धो ब्रह्मर्षिश्रेष्ठश्चासि ॥ २ ॥

तव बृहद्व्रतचर्यया नैष्ठिकाकामधर्मचर्यया वयं परितुष्टाः स्मः वयमिति बहुवचनं सर्वदेवाभिप्रायकं वरदानामीशानस्त्वं वरं प्रतीच्छ वृणीहि ते तुभ्यं भद्रं शुभमस्तु ॥ ३ ॥

इत्थं स्वराट् प्रचोदितः प्राह—जितं त इति त्रिभिः । देवदेवो ब्रह्मा तस्यापीश ! प्रपन्नानामार्तिं क्लेशं हरतीति तथाभूत ! आश्रितान् ध्यापयतीति तथा नोऽस्माकं भवान् सम्यगदृश्यतेति यदेतावतैव वरेणालम् ॥ ४ ॥

तत्र हेतुतया तद्दर्शनस्य दुर्लभतामाह—वाञ्छन्तीति । अजादयो ब्रह्मादयः योगपक्वेन योगविशुद्धेन मनसा यस्य श्रीमत्पादाब्जदर्शनं केवलं वाञ्छन्ति नतु पश्यन्ति स भवान् ममाक्षिगोचरोऽसि ॥ ५ ॥

अथापीति । यद्यपि त्वद्दर्शनमेव वरस्तथापि तव मायामाश्चर्यशक्तिं द्रक्ष्ये द्रष्टुमिच्छामि इत्यर्थः । तां विशिनष्टि यया मायया लोकपालैर्ब्रह्मादिभिः सहितो लोको जनः सहितां वस्तुत्वाद्ये त्वयि भिदां भेदं देवतिर्यङ्मनुष्यस्थावरभेदं वेद यया कृतां भिदां वेद तां मायामित्यर्थः ॥ ६ ॥

इतीति । ईडित उक्तोऽर्चितश्च भगवान् हे मुने ! स्मयो मन्दहासस्तेन सहितं यथा तथा तथेति द्रक्ष्यसीत्यनुगृह्य बदर्याश्रमं प्रति प्रागात् ॥ ७ ॥

तमेवेति । तमेवार्थं मायादर्शनरूपमर्थं चिन्तयन् कदा द्रक्ष्यामीति चिन्तयन्नित्यर्थः । अग्न्यादिष्वप्सु तदात्मबुद्ध्या ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

संस्तुत इति ॥ १ ॥

आत्मनो हरेः समाधिनोपासनाऽव्यभिचारेण सिद्धः कृतकृत्यः ॥ २ ॥

प्रतीच्छ स्वीकुरु ॥ ३ ॥

भवन्माहात्म्यप्रकटनं वरं वरयित्वत्यपि भगवद्दर्शनादितरो वरोऽनभीष्टो मुमुक्षोरिति हृदि कृत्वा प्रतिवक्ति—जितमिति ॥ ४ ॥

यदाकाङ्क्षापूरकं प्रायस्तदेव साध्यमस्य तदभावात्पथि तृणमिवेदमपि वन्द्यमिति तत्राह—वाञ्छन्तीति । भक्तियोगपक्वेन भक्त्युपासनाङ्गयोः परिपाकं प्राप्तेन वाऽक्षगोचरोऽभूरिति शेषः ॥ ५ ॥

ननूक्तं सत्यं तथापि भवत्समाधेरेतदेव फलं नान्यदस्तीति किमत्राह—अथापीति । मायाघटमानघटकशक्तिलक्षणां लोकोपकारकयथार्थज्ञानजनकत्वेनेन्द्रजाललक्षणां नेति भावेनाह, ययेति सतः परब्रह्मणः सर्वस्मात् भिदां वैलक्षण्यं वेद तादृशीं द्रष्टुमिच्छामि नेन्द्रजाललक्षणामित्यर्थः ॥ ६ ॥

सस्मयं सस्मितं तथा द्रक्ष्यसीत्युक्त्वा ॥ ७ ॥

आत्मनि स्वस्मिन् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥१॥

तपस्स्वाध्यायसंयमैरेवं आत्मसमाधिश्चैकाग्र्यं तेन या अनपायिनी भक्तिः तया सिद्धोऽसीत्यन्वयः ॥ २ ॥ ३ ॥

एतावता वरेणैवालं पर्याप्तिर्जाता किं तव वद्धवानिति ॥ ४ ॥

यतो गृहीत्वेति । अजाद्योऽपि कृतार्थो भवन्तीति शेषः ॥ ५ ॥

अथापि प्रारब्धभक्तकौतुकवशतयेति भावः । ननु जगत्पश्यन्, मम मायां पश्यन्नेवासि, तत्राह ययेति । अन्तः सतो बहिर्भिदां विदारयां प्रलयं यया भिदितया सत्या मद्भक्तः अन्योऽपि सपालो लोको वेद जानीयात् ॥ ६ ॥ ७ ॥

तमेव श्रीहरिमेव अर्थं परमार्थरूपं चिन्तयन् नतु मायादर्शनमित्यर्थः । स्वकर्मफलनिर्दिष्टमिति न्यायेन ॥ ८—१९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मायादर्शनजं दुःखं नवमे तु मुनेः शिशोः ।
प्रवेशो निष्क्रमः पातो वटाब्धौ वर्ण्यते मुहुः ॥१॥२॥

वयमिति बहुवचनमत्र प्रस्तोऽप्युमायाशिवोमाभिप्रायेण ॥ ३ ॥

जितन्ते तव सर्वोत्कर्षोऽस्त्वेव ॥ ४ ॥

गृहीत्वा कृतार्थी भवन्तीति शेषः ॥ ५ ॥

द्रक्ष्ये दिदृक्षे सतः कारणस्य भिदां कार्याकारेण नानाभेदं यद्वा सतो द्वैतप्रपञ्चस्य भिदां प्रलये सति विदारणम् ॥ ६ ॥

स्मयन्निति । मायादर्शनं दुःखानुभवहेतुरेव केवलं स एव वरो व्रियते त्वदृश एव वरस्यायोग्यत्वात् किन्तु मायादर्शनकौतुकं मायानास्वादितमित्यन्यथाऽस्य तदनुभूषा नैव निवर्त्स्यते तस्माद्दुःखमनुभूयैव ततो निवर्त्स्यामि यथा मधुरहितापि कश्चित् कटुफलसम्भावे इति बालके निवर्तयितुमसमर्थस्य पितुरप्युपदेशानपेक्षते किन्तु तत्कटुत्वस्य निश्चयार्थं

ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत् ।
क्वचित्पूजां विसस्मार प्रेमप्रसरसम्प्लुतः ॥ ९ ॥
तस्यैकदा भृगुश्रेष्ठ ! पुष्पभद्रातटे मुनेः ।
उपासीनस्य सन्ध्यायां ब्रह्मन् ! वायुरभून्महान् ॥ १० ॥
तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन्कराला: ।
अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥ ११ ॥
ततो व्यदृश्यन्त चतुःसमुद्राः समन्ततः क्ष्मातलमाग्रसन्तः ।
समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्त्तगभीरघोषाः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शिशुरूपेण तन्मध्येपि स्वदर्शनानन्दो दास्यत एवेत्यभिप्रायव्यञ्जकं स्मितम् ॥ ७ ॥

तमेवार्थं मायादर्शनरूपम् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं संस्तुताद्भगवतः सकाशात् मायादर्शनविषयकं वरं लब्ध्वा मुनिना यदनुभूतं तदथमे वर्ण्यते—संस्तुत इति । भृगूद्वहं मार्कण्डेयम् ॥ १ ॥

आत्मसमाधिनाऽऽत्मविषयकसमाधिना ॥ २ ॥

प्रतीच्छ गृहाण ॥ ३ ॥

ते तव जितमुत्कर्षो वर्त्तते ॥ ४ ॥

यस्य तव श्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा ब्रह्माद्यो भवन्ति चतुर्मुखत्वादिमाधं प्राप्नुवन्ति यद्वा, ब्रह्माद्यः कृतार्था भवन्तीत्यध्याहारः स भवान् मे अक्षगोचरः प्रत्यक्षो जातः किमतः परं वरेणार्थः ॥ ५ ॥

यद्यपि भवदीयं दर्शनमेव वरः अथापि तव मायामाश्चर्यरूपां शक्तिं द्रक्ष्ये द्रष्टुमिच्छामि यया स पाशो लोकपालैर्ब्रह्मादिभिः सहितो लोको जनः सद्भिर्दां मतः कारणस्य नानावस्थारूपं भेदं वेद तां तव मायावैभवदर्शनेन स्वच्छतयो भावियामीति भावः—

"स एवमनुभूयेदं नारायणविनिर्मितम् ।
वैभवं योगमायायाः तमेव शरणं ययुः" ।

इतिवक्ष्यमाणात् ॥ ६ ॥

स भगवान् स्मयन् मन्दहासं कुर्वन् तथेतिस्वीकृत्य प्रागात् ॥ ७।८ ॥

---

भाषा टीका ।

ॐ वटरकपुटशायिने नमः ।

सूत उवाच ।

सूतजी बोले, कि—बुद्धिमान् मार्कण्डेय ने जब भगवान् की इस प्रकार स्तुति करी, तब नरके सखा श्रीनारायण भगवान्, भृगुकुलोत्पन्न मार्कण्डेय ऋषि पर प्रसन्न होकर बोलते हुए ॥ १ ॥

श्रीभगवानुवाच ।

श्रीभगवान् बोले, कि—हे ब्रह्मर्षिवर्य ! तुम चित्त के एकाग्रपने से और मेरे विषै निर्विघ्न भक्तिसे तथा तप स्वाध्याय और संयमों से सिद्ध हुए ॥ २ ॥

हे महर्षे ! हम तुम्हारे नैष्ठिक ब्रह्मचर्यसे अत्यन्त सन्तुष्ट हुए, हम वर देने वालों के ईश हैं, तस्मात् जो तुमको इच्छित वर हो उसे मांग लो तुमारा मङ्गल हो ॥ ३ ॥

ऋषिरुवाच ।

मार्कण्डेय ऋषि बोले, कि—हे देवदेवेश ! हे प्रपन्नार्तिहर ! हे अच्युत ! बस हम इतने ही वरसे परिपूर्ण हैं, कि—जो साक्षात् आपने दर्शन दिये ॥ ४ ॥

हे भगवान् ! ब्रह्मादिक भी समाधिके बीच में परिपक्व मनसे जिन आपके श्रीयुक्त चरणारविन्दों के मानसिक दर्शन कोभी प्राप्त होकर कृतार्थ हो जाते हैं, वही साक्षात् आप मेरे नेत्रों के सन्मुख दर्शन दे रहे हो ॥ ५ ॥

हे कमलदल लोचन ! हे पुण्यश्लोकशिखामणे ! तथापि इतना वर मुझे दीजिये, कि—मैं आपकी उसमाया को देखूं, कि—जिस से लोकपालों सहित सम्पूर्ण लोक सत्पदार्थ में भेद अथवा कपट जानते हैं ॥ ६ ॥

सूत उवाच ।

सूतजी बोले, कि—हे मुने ! हे शौनक ! ऋषिने जब भगवान् की इस प्रकार स्तुति और पूजा करी तब भगवान् भी "तथास्तु" ऐसा कह सुन्दर हंसते हुए बदरिकाश्रमको जाते हुए । कहाभी है, कि—"हासो जनोन्मादकरी च माया" अर्थात् भगवान का हंसनाही तो माया का प्रसार है सो आप हँसकर गये ॥ ७ ॥

ऋषिभी अपने आश्रम में बैठे हुए उसी विचार में रहे, कि—माया कब देखूंगा । आश्रम में बसते हुए, अग्नि, सूर्य, चन्द्र, जल, पृथिवी, वायु, आकाश, आत्मा, इन सबों में ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

भावद्रव्यैर्मनोमयैर्द्रव्यैः क्वचित्कदाचित्प्रेमप्रसरसम्प्लुतः प्रेमोद्रेके प्राप्ते ॥ ९ ॥

अन्तर्बहिश्चाद्भिरतिद्युभिः खरैः शतह्रदाभिरुपतापितं जगत् ।
चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥
तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाऽऽघूर्णितवार्महार्णवः ।
आपूर्यमाणो वरषद्भिरम्बुदैः क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मायादर्शनमाह--तस्येत्यादिना ॥ १० ॥

तं वायुमनु बलाहका मेघा अभयङ्करा बभूवुः ते च तडिद्भिः सहिता उच्चैः स्वनन्तो गर्जन्तः अक्षो रथाङ्गं तद्वत्स्थविष्ठा अभितो वर्षधारा मुमुचुः ॥ ११ ॥

चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगेनोर्मिबहुलैर्भूतलं ग्रसन्तः उग्रा नक्रा येषु महाभया आवर्ता येषु गभीरो घोषो येषु ते च तेच तेच ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वत्र गोविप्रादिषु हरिं ध्यायन् भावद्रव्यैर्मनोमयैर्द्रव्यैरपूजयत मानसोपचारैः अपूजयदित्यर्थः । क्वचिदिति । भक्तिप्रसरेण प्रीत्यात्मकभक्तिपरीवाहेण सम्प्लुतः व्याप्तः तां पूजामपि विस्मृतवान् ॥ ९ ॥

मायादर्शनमुपवर्णयति—तस्येत्यादिना यावदध्यायसमाप्ति । हे भृगुश्रेष्ठ ! तस्य मुनेः मार्कण्डेयस्य उपासीनस्य सतः हे ब्रह्मन् ! महान् वायुरभूत ॥ १० ॥

तमिति । तं वायुमनु बलाहका मेघाः कराला भयङ्कराः अभयङ्करा बभूवुः ते च तडिद्भिः सहिता उच्चैःस्वनन्तो गर्जन्तः अक्षः शकटाक्षः तद्वत्स्थविष्ठाः अतिस्थूला अभितो वर्षधारा मुमुचुः ॥ ११ ॥

तत इति । चतुर्दिक्षु वर्तमानाः समुद्राः परितः क्ष्मातलं भूमण्डलम् उग्रा नक्रा येषु तैः समीरवेगोत्थितैरूर्मिभिः ग्रसन्तः भयानका आवर्ता येषु गभीरो घोषो येषु ते च व्यदृश्यन्त ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

किम्बहुना सर्वत्र च व्याप्तं भावद्रव्यैः मनःकल्प्यपुष्पादिद्रव्यैः अर्हयामासेत्यर्थः । क्वचित्कदाचित् विस्मरणे कारणं भक्तिप्रसरसंप्लुत इति ॥ ९ ॥

अर्चनफलं वक्तुमुपक्रमते—तस्येति । तस्याश्रमे महान् वायुरभूत् ॥ १० ॥

तं वायुमन्वनन्तरं ते बलाहकाः अश्यामितः अक्षस्थविष्ठाः अक्षो रथाङ्गनीपो दण्डस्तद्वत्स्थूलतमा वर्षधारा मुमुचुः तडिद्भिः सह ॥ ११ ॥

समीरवेगेनोन्नतोर्मिभिः सह उग्रनक्रैर्भयानकस्य भयङ्करस्यावर्तस्य गभीरा गम्भीरा घोषा येषां ते तथा ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भावद्रव्यैर्मनोमयैः ॥ ९ ॥
मायादर्शनमाह—तस्येत्यादिना ॥ १० ॥
अक्षो रथाङ्गं तद्वदतिस्थूलाः ॥ ११ ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भावद्रव्यैर्मनोमयद्रव्यैः ॥ ९—१० ॥

तं वायुमनु बलाहकाः मेघा अभवन् ते च तडिद्भिः सहोच्चैर्गर्जन्तः अक्षवद्रथाङ्गवत् स्थविष्ठाः वर्षधाराः मुमुचुः ॥ ११ ॥

उग्रनक्राश्च महाभयावर्ताश्च गभीरघोषाश्च ते तथा चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगोर्मिभिः समन्ततः क्ष्मातलमाग्रसन्तो व्यदृश्यन्त ॥ १२ ॥

भाषाटीका ।

तथा अन्यत्र सर्वत्र भी श्रीहरि का ध्यान करते हुए, भावमय द्रव्यों से श्रीहरि का पूजन करते हुए । किसी समय में मार्कंडेय जी प्रेम के प्रवाह में डूबकर पूजा के उपचारों को भूलते लग जाते, इस प्रकार अपने आश्रम में निवास करते रहे ॥ ९ ॥

हे शौनकजी ! एक समय पुष्पभद्रा नदी के तट पर सन्ध्या के समय बैठे हुए, मार्कंडेयजी श्रीहरिकी उपासना करते रहे । हे ब्रह्मन् ! इतने में ही बड़ा भारी पवन चलने लगा ॥ १० ॥

बड़े प्रचंड शब्द करने वाले उस पवन के पीछे ही चारों तरफ से बड़े विकराल मेघ घुमड़ आवे, और (चक्र के बीच का काष्ठ जिसमें अरा पुहे हुए रहते हैं उसका नाम अक्ष है) उस अक्ष के बराबर मोटी धाराओं से बर्षने लगे, बीजलियों के कौंध बड़े जोर शोर से होने लगे, मेघों में कड़कड़ाहट जोर से होने लगा ॥ ११ ॥

तस्के पीछे ऋषि क्या देखते हैं, कि—चारों ओर से चारों समुद्र, पवन के वेग से बढ़ी हुई तरंगोंसे इस भूतल को डुबाते हुए चले आते हैं । जिन समुद्रों में बड़े उग्र मकर मच्छ और बड़े भयंकर भँवर पड़ रहे हैं, और बड़ा ही भारी शब्द हो रहा है ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मना सह जरायुजादिचतुर्विधं जगद्बहिश्चोपतापितं वीक्ष्य क्ष्मां च जलाप्लुतां वीक्ष्य मुनिः सन्त्रासं प्राप मनो-

सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत्सह दिग्भिराप्लुतम् ।
स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडान्धवत् ॥ १५ ॥
क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वता हतः ।
तमस्यपारे पतितो भ्रमन् दिशो न वेद खं गां च परिश्रमेषितः ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिकायाम् ।

पतापितम् अद्भिः कथम्भूताभिः अतिघुभिरतिक्रान्ता द्यौर्याभिः खरैश्च सूर्यरश्मिभिर्वायुभिर्वेति शेषः । शतह्रदाभिश्च विद्युद्भिः दीर्घत्वमार्षं छन्दोऽनुसारेण ॥ १३ ॥

प्रभञ्जनेनाऽघूर्णितं प्रकम्पितं वा उदकं यस्मिन् सः प्रत्यगाच्छादयामास समं सह ॥ १४ ॥

सक्ष्माऽन्तरिक्षं भूम्यन्तरिक्षस्थप्राणिसहितं सदिवं स्वर्गस्थदेवसहितं भागणा ज्योतिर्गणास्तैः सहितं जटा विक्षिप्य विकीर्य ॥ १५ ॥

परिश्रमेण इषितो गतः प्राप्त इत्यर्थः "इषु सर्पणे" इत्यस्मात् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं मनाक् ईषत् ॥१३॥
वाताघूर्णितजलमर्त्यं तिरश्चकार ॥ १४ ॥
सभागणं ज्योतिर्गणसहितम् उर्वरितः अवशिष्टः ॥१५–१७॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तप्यमानमिति । खरैरित्यस्य सूर्यरश्मिभिरिति शेषः । शतह्रदाभिर्विद्युद्भिश्छन्दोऽनुसारेण दीर्घत्वमार्षम् अतिघुभिरतिक्रान्ता द्यौर्याभिस्ताभिरद्भिर्जैवेश्चान्तर्बहिश्चपतापितं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं जगज्जलाप्लुतां क्ष्मां भूमिं च वीक्ष्य मुनिर्विमनाः समत्रसदबिभेत् ॥ १३ ॥

तस्येति । तस्य मुनेरित्थमुद्वीक्षमाणस्य वर्षद्भिरम्बुदैरापूर्यमाणः प्रभञ्जनेन वायुना आघूर्णितं भ्रामितं वाः उदकं यस्मिन् ऊर्मिभिर्भीषणश्चार्णवः द्वीपवर्षाद्रिभिस्समं सह सहितामित्यर्थः क्ष्मामप्यपात् छादयामास ॥ १४ ॥

सक्ष्मान्तरिक्षमिति । भूम्यन्तरिक्षसहितं सदिवं स्वर्गसहितं सभागणं नक्षत्रगणसहितं त्रैलोक्यमद्भिः आप्लुतमासीत्तदा स मुनिरेक एव उर्वरितः अवशेषितः विक्षिप्ताः जटाः येन सः जडान्धवच्च विचचार ॥ १५ ॥

किञ्च क्षुत्तृड्भ्यां परीतो व्याप्तः तृतीयान्तपाठे मकरादीनां विक्षेपकं वीचिभिस्तरङ्गैर्नभस्वता वायुना च हतः ताडितः अत एव परिश्रमेणाभितो व्याप्तः दिवमन्तरिक्षं खमाकाशं गां भूमिं च न वेद ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

घनैर्मेघैरभिवृष्टाभिरद्भिरुपतापितमाप्लावितमभितो द्युतिमतीभिः शतह्रदाभिस्तडिद्भिश्चोपतापितं दृष्टवत्कृतं क्ष्मामब्धिजलाप्लुतां वीक्ष्य ॥ १३ ॥

अप्यधात् छादितवांस्तस्य मुनेरुद्वीक्षतः ॥ १४ ॥

सदिवं स्वर्गेण सहितं सभागणं सनक्षत्रगणं जडवत् अन्धवत् ॥ १५ ॥

वीचिनभस्वता तरङ्गवायुना भ्रमन्त्या दिशो यस्य स तथा वृष्टिमागुरिरल्लोपमिति वचनात् टावन्तो दिशाशब्दः परिश्रमेषितः दुःखसमुद्रवासी ॥ १६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतिक्रान्ता द्यौर्याभिस्ताभिरद्भिः खरैः सूर्यरश्मिभिः शतह्रदाभिर्विद्युद्भिः दीर्घत्वमार्षम् ॥ १३ ॥ १४ ॥
सभागणं ज्योतिर्गणसहितम् ॥ १५ ॥
वीचियुक्तेन नभस्वता मारुतः प्राप्तघातः परिश्रमेण इषितः व्याप्तः "इषगतौ" इत्यस्मात् ॥ १६—१९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतिघुभिः अतिक्रान्ता द्यौर्याभिस्ताभिरद्भिः खरैर्वायुभिरिति शेषः शतह्रदाभिर्विद्युद्भिः दीर्घत्वं छान्दसं सहात्मना जरायुजादिचतुर्भेदं जगदन्तर्बहिरुपतापितं जलाप्लुतां क्ष्मां च वीक्ष्य विमनाः सन् समत्रसत् ॥ १३ ॥
समं सह अप्यधात् आच्छादयामास ॥ १४ ॥
जटा विक्षिप्य विकीर्य ॥ १५ ॥
परिश्रमेण इषितः व्याप्तः ॥ १६ ॥

---

भाषा टीका ।

स्वर्ग का भी उल्लंघन करने वाले जलों से तथा बड़े तीक्ष्ण पवन और बीजलियों से भाप सहित जरायुजादि चार प्रकार के प्राणियों वाले जगत् को ताप युक्त देखकर, तथा पृथिवी को जल में डूबी हुई देखकर, ऋषि बड़े दुःखित हुए और त्रास को प्राप्त होते हुए ॥ १३ ॥

उन ऋषि के इस प्रकार देखते २ तरंगों से भयंकर और पवन से घूम रहे जल जिसमें ऐसा वह महासमुद्र, क्या

क्वचिद्गतो महावर्त्ते तरलैस्ताडितः क्वचित् ।
यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥
क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं भयम् ।
क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥ १८ ॥
अयुतायुतवर्षाणां सहस्राणि शतानि च ।
व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायावृतात्मनः ॥ १९ ॥
स कदाचिद्भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः ।
न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥
प्रागुत्तरस्यां शाखायां तस्याऽपि ददृशे शिशुम् ।
शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥ २१ ॥
महामरकतश्यामं श्रीमद्वदनपङ्कजम् ।
कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥
श्वासैजदलकाभातं कम्बुश्रीकर्णदाडिमम् ।
विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥
पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् ।
श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥ २४ ॥

भाषा टीका ।

करने वाले मेघों के सहित द्वीप खंड और पर्वतों सहित पृथिवी को डुबा देता भया ॥ १४ ॥

उस समय पृथिवी, अंतरिक्ष, स्वर्ग, तारागण, और दिशाओं सहित तीनों लोक जल में मग्न हो गये, और वे महामुनि मार्कंडेय जी एकले ही बच रहे, सो वो भी अपने जटाओं को बिखेरे कर जड़ और अन्ध की तरह उस जल में भ्रमते रहे ॥ १५ ॥

भूखे प्यासे, और मकर तिमिंगल इत्यादि नाना प्रकार के जल जंतुओं से उपद्रुत, कभी तरंगों की टक्करों से कभी पवन से ताड़ित होते हुए, उस अपार अंधकार में पड़े हुए मारे परिश्रम के थक गये, और उस समुद्र में भ्रमते २ दिशाओं का ज्ञान न रहा, और न आकाश को जानते हुए न पृथिवी को ॥ ॥ १६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्योन्यवधाभिभितयूथस्याय परस्परं युध्यद्भिः ॥ १७—१८ ॥
विष्णुमायावृतात्मन इति स तथा दुःखानिष्कर्षः ॥ १९ ॥
ककुदुन्नतप्रदेशे न्यग्रोधपोतं कोमलवटम् ॥ २० ॥
तस्यैशानदिक्शाखायां शिशुमपि ॥ २१ ॥
श्रीमद्रम्यं वदनपङ्कजं यस्य तं कम्बुवत्त्रिरेखाङ्किता ग्रीवा यस्य तं महोरस्कं विशालवक्षसम् सुनासं शोभना नासा यस्य तं सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥

श्वासैरेजन्तः कम्पमाना अलकास्तैराभातं शोभितम् कम्बुवत् मन्तर्वलयेन श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तं विद्रुमतुल्याधरभासा ईषच्छोणायितं सुधातुल्यं स्मितं यस्य तम् ॥२३॥

पद्मगर्भवत् आ ईषदरुणावपाङ्गौ नेत्रप्रान्तौ यस्य तं हृद्यो हासो यस्मिंस्तदवलोकनं यस्य तम् श्वासैरेजन्त्यश्चलन्त्यो वलयः त्रिवलितरङ्गरेखास्ताभिः संविग्ना चञ्चला निम्ना गम्भीरा नाभि-र्यस्मिंस्तद्दलवदश्वत्थपत्रसदृशमुदरं यस्य तम् ॥ २४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मृत्युमिव ॥ १८—१९ ॥
पृथिव्याः ककुदि उन्नतस्थले फलपुष्पाकरम् माश्रयमासीनम् ॥ २० ॥

अत्यन्तविदं जगत् अल्पदेशे विपुलदेशान्तर्भावोऽल्पकाले बहुकालान्तर्भावः तद्वितरणनात् तद्व्यतिरिक्तमुक्तपदार्थभेदतत्कालाव-स्थादि सविशादिसृष्टिरीश्वरस्य सर्वशक्तित्वादुपपन्ना ॥ २१—२४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कचिदिति । तरलैस्तरङ्गैरन्योन्यघातिभिरन्योन्यं युद्धमानैर्यादोभिः जलजन्तुभिः स्वयम् भक्षितश्च ॥ १७ ॥

कचिन्मोहमिति—मृत्युं मृत्युमिव ॥ १८ ॥

अयुतायुतवर्षाणामिति । विष्णोर्मायया वृतः आत्मा मनो यस्य तस्य मुनेः तस्मिन् जले भ्रमतः सतः महान् कालो व्यतीयायेत्यर्थः ॥ १९ ॥

स इति । पृथिव्याः ककुदि तदुन्नतस्थले फलैः पल्लवैश्च शोभितं न्यग्रोधपोतं कोमलवटवृक्षं ददर्श पश्यति स्म ॥ २० ॥

प्रागिति । तस्य न्यग्रोधपोतस्य प्रागुत्तरस्यामीशान्यां दिशि या शाखा तस्यां शिशुमपि ददर्श, तं विशिनष्टि—शयानमित्यादिना । तमोऽन्धकारं प्रसन्तं तिरस्कुर्वन्तम् ॥ २१ ॥

इन्द्रनीलवच्छ्यामं श्रीमद्रम्यं वदनपङ्कजम् यस्य तं कम्बुवद्धत्त्वत्रिरेखावृता ग्रीवा यस्य तम् महोरस्कं वक्षोलक्षणम् शोभना नासा यस्य तम् सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥

निःश्वासैरेजन्तः कम्पमाना ये अलकास्तैराभातम् (शोभमानम्) शोभितं कम्बुवद्वर्त्तुलत्वेन श्रीयँयोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पसदृशमाभरणं यस्य तम् विद्रुमवदोष्ठरक्तस्य भासा ईषच्छोणायितं शुचि शुभ्रं स्मितम् यस्य तम् ॥ २३ ॥

पद्मगर्भाविवारुणावपाङ्गौ नेत्रान्तौ यस्य तम् हृद्यम् हासयुक्तम् अवलोकनम् यस्य श्वासैरेजन्त्यश्चलन्त्यः वलयः तिर्यङ्निम्नरेखा यास्ताभिः संविग्ना चञ्चला निम्ना च नाभिर्यस्मिन् तदश्वत्थस्य पत्रवद्भासम् उदरम् यस्य तम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तरलैस्तरङ्गैः ॥ १७—१९ ॥

ककुदि उन्नतस्थले ॥ २० ॥

तस्य वटस्य ॥ २१ ॥ २२ ॥

श्वासेन मुखवायुना एजतां कम्पमानानामलकानां भ्रातेन मिश्रया श्रिया युक्त कर्णावाडिसे कर्णाभरणं यस्य स तथा तम् ईषच्छोणाश्लिष्टा ॥ २३ ॥

पद्मगर्भवत् अरुणावपाङ्गौ नेत्रान्तौ यस्य तं श्वासैरेजन्त्यश्चलन्त्यो वलयस्त्रिवलिरेखास्ताभिः संविग्नगम्भीरा नाभिर्यस्य स तथा चलमुदरं यस्य स तथा श्वासैजद्वलिसंविग्ननिम्ननाभिश्चासोदरश्च स तथा तं वलोदरमिति वा पाठः दृष्टवदश्वत्थदलवत् पत्रवत् उदरं यस्येति ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अयुतायुतवर्षाणामिति तस्य भ्रमं जातमित्यर्थः १९—३३ । तद्यस्तदन्तर्धाने दृष्टान्तः यथेहेति अनीशा ईशायामसमर्थः येन निर्मिता ईहा वाञ्छा यथा सद्योन्तर्धनेतथा तस्मादेषस्तात्वाञ्छाविषयोऽपि भगवानन्तर्दधे इत्यर्थः ॥ ३२—३४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ककुदि उन्नतप्रदेशे ॥ २०—२२ ॥

श्वासैरेजन्तः कम्पमाना अलकास्तैराभातं कम्बुवद्वर्त्तुलत्वेन श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तम् ॥२३॥

श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यग्निम्नरेखास्ताभिः सह संविग्नं चञ्चलं निम्ननाभिगम्भीरनाभिदलोदरं दलमश्वत्थपत्रं तद्वदुदरं यस्य तम् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्योन्यघातिभिस्तद्भक्षणार्थं परस्परं युध्यद्भिः ॥ १७ ॥

मृत्युं विस्मृतिम् ॥ १८ ॥

विष्णुमायया आवृतः आत्मा मनो यस्य ॥ १९ ॥

ककुदि उन्नतप्रदेशे न्यग्रोधपोतं कोमलं वटम् ॥ २० ॥

तस्य न्यग्रोधपोतस्य ॥ २१ ॥ २२ ॥

श्वासैरेजद्भिः कम्पमानैरलकैराभातम् शोभितम् कम्बुवत् श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तं विद्रुमवदोष्ठोऽधरस्तद्भासया शोणायितं सुधासदृशं स्मितं मन्दहसितम् यस्य तम् ॥ २३ ॥

पद्मगर्भवत् किञ्चिदरुणौ अपाङ्गौ नयनप्रान्तौ यस्य तम् हृद्ये हृदयप्रिये हासावलोकने यस्य तम् श्वासैजद्वलिभिः प्राणसञ्चारेण कम्पमानाभिर्वलिरेखाभिः संविग्नाऽस्थिरा निम्ना नाभिर्यस्मिन् तदश्वत्थदलनिभमुदरं यस्य तम् ॥ २४ ॥

---

भाषाटीका ।

किसी जगह बड़े भँवर में पड़जाते, किसी समय तरंगों से ताड़ित होते, और किसी जगह परस्पर में घातकरने वाले जलजन्तु भी मुनि को भक्षण करने लगते थे ॥ १७ ॥

किसी समय शोक को प्राप्त होते, कभी मोह को, कभी दुःख को कभी सुख को, कभी भय को, और कभी व्याधियों से पीड़ित होकर मृत्यु सदृश दुःख को भी प्राप्त होजाते थे ॥ १८ ॥

इस प्रकार श्रीविष्णुकी माया देखने वाले मुनिको उस समुद्रमें भ्रमते २ लाखों क्रोड़ों वर्ष व्यतीत हो गई, ॥ १९ ॥

वह ऋषि किसी एक समय भ्रमते२ एक पृथिवी के टीले पर अति मनोहर फल और पल्लवों से सुशोभित एक वटके पौदे को देखते हुए ॥ २० ॥

और वटकी ईशान कोणकी एक शाखामें एक पत्रके पुटमें सोये हुए सुन्दर शिशु को देखते हुए, कैसा वह शिशु है, कि—अपनी कान्ति से उस प्रलय कालके अंधेरे को दूर कर रहा है ॥ २१ ॥

चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् ।
मुखे निधाय विप्रेन्द्रो धयन्तं वीक्ष्य विस्मितः ॥ २५ ॥
तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ।
प्रहृष्टरोमाऽद्भुतभावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥ २६ ॥
तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तश्शरीरं मशको यथाऽऽविशत् ।
तत्राप्यदोन्यस्तमचष्ट कृत्स्नशो यथापुराऽमुह्यदतीव विस्मितः ॥ २७ ॥
खं रोदसी भगणानद्रिसागरान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ।
वनानि देशान् सरितः पुराकरान् खेटान् व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥
महान्ति भूतान्यथ भौतिकान्यसौ कालं च नाना युगकल्पकल्पनम् ।
यत्किञ्चिदन्यद्व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥
हिमालयं पुष्पवहां च तां नदीं निजाश्रमं तत्र ऋषीनपश्यत् ।
विश्वं विपश्यन् श्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लयाब्धौ ॥ ३० ॥
तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ।
तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥
अथ तं बालकं वीक्ष्य नेत्राभ्यां धिष्ठितं हृदि ।
अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥

भाषा टीका।

महामरकतमणि के सदृश श्याम और शोभा युक्त वदनकमल जिसका, शङ्ख सरीखा विशाल वक्षःस्थल, सुन्दर नासिका और सुन्दर भृकुटि जिसकी ॥ २२ ॥

श्वास से कम्पित हो रही जो अलकावली तिससे शोभित और शंख के तरह भीतर वलय से शोभा वाले दाडिम के पुष्प सदृश कर्ण हैं जिसके, और प्रवाल ( मूंगा ) के सदृश ओष्ठ की कान्ति से किञ्चित् ललाई को लिये हुए अमृत सदृश मन्द हंसन जिसकी ॥ २३ ॥

कमल के गाभे के सदृश अरुण अपांग । नेत्र की कोर हैं जिसके, और हृदय ग्राही है हास पूर्वक चितवन जिस की, तथा श्वास से चलायमान जो त्रिवली तिससे चंचल और गंभीर है नाभि जिसमें ऐसा पीपल के दल सदृश है उदर जिसका ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

चार्वोऽङ्गुलयो ययोस्ताभ्यामुन्नीयाऽऽकृष्य धयन्तं पिबन्तम् ॥ २५ ॥

हृत्पद्मं च विलोचनाम्बुजे च प्रोत्फुल्लानि यानि यस्य सः अद्भुतभावाऽस्याश्चर्यरूपं तेन शङ्कितः सन्नपि तं प्रष्टुं पुरः प्रससार समीपं गतः ॥ २६ ॥

अदः इदं जगद्यथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तं दृष्ट्वा चातीव विस्मितः सन्नमुह्यत ॥ २७ ॥

कृत्स्नशो दर्शनं प्रपञ्चयति–खमित्यादिना । ककुभो दिशः पुराण्याकरांश्च खेटान् कर्षकग्रामान् व्रजान् गोकुलानि आश्रमांश्च वर्णांश्च तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥

नानायुगानि कल्पांश्च कल्पयति तैर्वा कल्पयत इति तथा तं कालं च सदिव परमार्थं इवावभासितं तेनैव ॥ २९–३० ॥

वटञ्च तोकञ्च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापाङ्गनिरीक्षणेन निरीक्षितः सन् अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति द्वयोरन्वयः कथम्भूतम्? नेत्राभ्यां हृदि धिष्ठितमधिष्ठितम् ॥ ३१–३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

चारवः सुन्दराः अङ्गुलयो ययोस्ताभ्यां पाणिभ्यां चरणाम्बुजमुन्नीय उद्धृत्य मुखे निधाय तदङ्गुष्ठं धयन्तं पिबन्तम् इत्थम्भूतम् शिशुं विलोक्य विस्मितो बभूवेत्यर्थः २५ ॥

तद्दर्शनादिति । तस्य शिशोर्दर्शनाद्वीतो गतः परिश्रमो यस्य सः प्रोत्फुल्लानि हृत्पद्मं विलोचनाम्बुजे च यस्य स अद्भुत-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भावेनात्याश्चर्यरूपेण शङ्कितोपि तं बालकं द्रष्टुं पुरः संसार समीपं गतः इत्यर्थः ॥ २६ ॥

तावत्तदा हे भार्गव ! स मुनिः शिशोः श्वसितेन मशकवदन्तःशरीरमाविशत् शिशोः श्वासवातेन तच्छरीरान्तः प्राविशदित्यर्थः । तत्रापि तत्कुक्षौ यदोऽन्यम् अमुष्मात् पूर्वं तं तथाविधं शिशुमचष्ट यथा पुरा तच्छरीरान्तःप्रवेशात्पूर्वं यथा कृत्स्नशः कालमाचष्ट तद्वत् एव दृष्ट्वाऽतीव विस्मितो ऽमुह्यत् ॥ २७ ॥

कृत्स्नशो दर्शनं प्रपञ्चयति—खमिति । खम् आन्तरिक्षं रोदसी द्यावापृथिव्यौ भगणानद्रिगणान्नदींश्च सागरांश्च ककुभो दिशः सुरांश्चासुरांश्च तान् पुराणि दृष्टादिर्मानि आकारान् रत्नाद्युत्पत्तिस्थानानि खेटान् कर्षकग्रामान् व्रजान् गोष्ठानि न आश्रमांश्चतुरो वर्णान् तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥

महान्ति भूतान्याकाशादीनि पञ्चभौतिकानि देहमनुष्या दीनसौ मुनिः नानायुगानि कल्पांश्च कल्पयतीति तथा तं कालं च किं बहुना यत्किञ्चिद्व्यवहारकारणं व्यवहारविषयं विषयस्यापि व्यवहारं प्रति कारणत्वात्कारणमित्युक्तम् स त्रिकालविभक्तमज्ञानां नित्यमिव प्रतीयमानं विश्वं तत्सर्वं ददर्श ॥ २९ ॥

किञ्च । हिमालयमिति ॥ ऋषी नरनारायणौ इत्थं विश्वं विपश्यन् शिशोः श्वसितात् श्वासाद्बहिर्निरस्तः निष्कासितः पुनः प्रलयाब्धौ न्यपतत् ॥ ३० ॥

पश्यन्निति । तत्पर्णपुटे शयानम् इति वटपत्रपुटे शयानं तोकं शिशुं च पश्यन् तस्य शिशोः प्रेम्णा सुधास्मितेन च युक्तेनापाङ्गनिरीक्षणेन निरीक्षितो बभूवेति शेषः ॥ ३१ ॥

अथेति । नेत्राभ्यां हृदि वेष्टितमालिङ्गितम् बालकमधोक्षजं पुनर्बहिः परिष्वक्तुमभ्ययादभिमुखं जगाम ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

धयन्तं पिबन्तम् ॥ २५ ॥

अद्भुतभावेनाश्चर्यलीलाचेष्टया शङ्कितः सन्नपि पुरः प्रससार समीपङ्गतः ॥ २६ ॥

स भार्गवः मार्कण्डेयः तावत्तदा पूर्वमेव श्वसितेनान्तर्गच्छता सह शिशोरन्तःशरीरं मशको यथा तथाविशदित्यन्वयः । तत्रोदरान्ते विन्यस्तमदो विश्वं कृत्स्नशोऽचष्ट दृष्टवान् दृष्ट्वा च पुरा यथा बहिर्विस्मितो मुह्यत्तथामुह्यदित्यन्वयः । अत्र मोहो नामाश्चर्यबुद्धिरेव नत्वन्यथाज्ञानं तत्रात्वे प्राचीनाचार्यपुराणवचनैर्यद्यपत्तेरिति ॥ २७ ॥

विश्वं विशिनष्टि—खं रोदसी इत्यादिना । चाश्रमवर्णवृत्तयो वार्ताश्च ॥ २८ ॥

महान्ति भूतानि पञ्चभूतानि नानायुगकल्पनं येन स तथा तं कालं च अन्यद्यत्किञ्चिद्व्यवहारकारणं हानोपादानादिसमर्थं तथाद्राक्षीत् सदिवसत्वेन यथार्थत्वेनैवावभासितं प्रकाशितं मिथ्याभूतत्वेन ॥ २९ ॥

पुनः किमभूदत्राह—विश्वमिति । बहिः श्वसतः शिशोः श्वासेन बहिर्निरस्तो पुनः प्रलयाब्धौ न्यपतत् ॥ ३० ॥

वटे च तोकं च वीक्ष्य तस्य शिशोः प्रेमसुधायाः प्रेमामृतादुद्भूतस्मितसहितेनापाङ्गनिरीक्षणेन निरीक्षितो ऽभूदित्यन्वयः ॥ ३१ ॥

अथ तं बालकं परिष्वक्तुमभ्यगात् ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मच्चरणाम्बुजे कीदृशं मधु वर्तते यत एतदास्वादनार्थं बहवो भक्ता यतन्ते तस्मादिदमहमपरास्वाद्य परिचिन्वे इतीव धयन्तं पिबन्तम् ॥ २५ ॥

अद्भुतभावेन अत्याश्चर्यस्वरूपेण शङ्कितः भायं प्राकृतो बालक इति प्राप्ताशङ्कोऽपि प्रष्टुम् ॥ २६ ॥

अदः जगत् यथा पुरा प्रलयात्पूर्वम् ॥ २७—२८ ॥

स मार्कण्डेयः द्विषा दिवस एव अवभासितं प्रकाशयुक्तं ददर्श पुष्पवद्भ्यां पुष्पभद्राम् ॥ २९ ॥

लयाब्धौ तिपस्य पुनरप्ययुतायुतवर्षपर्यन्तम् कष्टमनुभूय पृथिव्याः ककुदि वटपत्रशायिनं बालं दृष्ट्वा तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापाङ्गनिरीक्षणेन निरीक्षितः सन् पुनरपि तदीयश्वासेन पूर्ववत् प्रवेशनिर्गमौ पुनरेव समकरवः प्रवेशनिर्गमावप्रिमवाक्यद्वयोः द्वयो ॥ ३०—३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

धयन्तं पिबन्तम् ॥ २५ ॥

प्रोत्फुल्लानि हृत्पद्म विलोचने च यस्य सः अद्भुतेनात्याश्चर्येण भावेन शङ्कितः किमयमीश्वर इति शङ्का प्राप्ता यस्य सः तं प्रष्टुम् पुरः समीपं प्रससार ॥ २६ ॥

तत्रापि तच्छरीरमध्येऽपि अदः इदं विश्वम् यथा पुरा प्रलयात्पूर्वम् तथैवाचष्ट अतोऽतीव विस्मितः ॥ २७—२८ ॥

नानायुगानि कल्पांश्च कल्पयतीति स तथा तं च इत्यादिकः पदार्थ सदेवकारणभूतं सत्त्वेन तत्सदाकारेण च भासितम् ददर्श भगवत्कृतम् सर्वम् सत्यमेव सर्वस्य तदात्मकत्वात् ॥ २९—३० ॥

तस्मिन् लयाब्धौ पृथिव्याः ककुदि वटे तत्पर्णपुटे तोकम् च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेन अपाङ्गनिरीक्षणेन निरीक्षितः सन् तं बालं नेत्राभ्यां हृदि धिष्ठितमपि पुनर्बहिरपि परिष्वक्तुमभ्ययादिति द्वयोरन्वयः ॥ ३१—३२ ॥

---

भाषा टीका ।

मुनिने और कैसा उस बालक को देखा, कि सुन्दर मनोहर छोटी २ अंगुलियों वाले दोनों हाथो से अपने चरण कमल को ऊंचा उठाकर मुख में अंगुष्ठ देकर पीरहा है । ऐसे उस अद्भुत बालक को देखकर मार्कंडेय जी बड़े विस्मय को प्राप्त हुए ॥ २५ ॥

मुनि का भी सब परिश्रम उस बालक के दर्शन से

तावत्स भगवान् साक्षाद्योगाधीशो गुहाशयः ।
अन्तर्दध ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥
तमन्वथ वटो ब्रह्मन् ! सलिलं लोकसम्प्लवः ।
तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत्स्थितः ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां द्वादशस्कन्धे मार्कण्डेयोपाख्याने भगवन्मायादर्शनं नाम नवमोऽध्यायः ॥ ९ ॥

भाषा टीका ।

दूर होगया, तथा हृदय कमल और नेत्र कमल प्रफुल्लित होगये, रोमाञ्च ऱ्यारे हो आये, और आश्चर्य से शङ्कित होकर मुनि उस बालक से पूछने को उसके सन्मुख समीप गये ॥२६॥

इतने में ही भृगु वंशी वह मुनि उस बालक के श्वास के साथ बालक के शरीर में मशक के तरह भीतर चले गये, भीतर भी जाकर इस समग्र जगत को जैसा का तैसा रचा हुआ देखकर बड़े विस्मय को प्राप्त होकर मोहित होते हुए ॥२७॥

मुनिने बालक के उदर में क्या देखा कि—आकाश, द्यावा-पृथिवी, नक्षत्रमण्डल, पर्वत, समुद्र, सप्तद्वीपसहित द्वीप, दिशायें सुर, असुर, वन, देश, सरितायें, पुर, खानें, छोटे२ ग्राम, गोधन के बाड़े, आश्रम और वर्णोंकी जीविकायें ॥ २८ ॥

बड़े २ भूत प्राणी, भौतिक पदार्थ, तथा नाना युग और कल्प जिनमें कल्पना किये जांय इतने बड़े काल को भी बालक के उदर में देखा, अर्थात् उस जगह बहुत काल बीत गया, और भी जो कुछ व्यवहार कारण और ईश्वर सरीखा भान होने वाला विश्व है, तिसको भी देखा ॥ २९ ॥

तिसमें भी हिमालय पर्वत, और पुष्पभद्रा नदी, और उसके तट पर अपना आश्रम भी मार्कण्डेय ऋषि ने देखा, तथा वहां पर रहने वाले ऋषियों को भी देखा, इस प्रकार उस बालक के उदर में विश्व को देख रहे थे, कि—इतने में ही बालक का बाहर को श्वास निकला उसके साथ निकल फिर भी मार्कण्डेय ऋषि उसी प्रलय के समुद्र में गिरे ॥ ३० ॥

वहां फिर भी पृथिवी के एक टीले पर जमे हुए एक छोटे से वट के वृक्ष को देखते हुए, और उसके पत्र के पुट में सोये हुए एक मनोहर बालक को देखते हुए। और ऋषि उस बालक की प्रेम रूप अमृत युक्त मन्द मुसकानि सहित कटाक्षों के निरीक्षण के पात्र हुए ॥ ३१ ॥

जो बालक अन्तर्यामि रूप से हृदय में विराजमान है उसी नेत्रों से बालक को देखकर ऋषि प्रथम बहुत क्लेश को प्राप्त हुए रहे अतएव अधोक्षज के आलिङ्गन करने को उनके समीप गये ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तावत्परिष्वङ्गात्पूर्वमेव ऋषेस्तस्यान्तर्हितो बभूव तदुद्यमवैफल्ये दृष्टान्तः, अनीशो निर्धनस्तेन निर्मिता ईहा क्रीडा यथेति ॥ ३३ ॥

अन्तर्हितं भगवन्तमनु वटः सलिलं लोकसम्प्लवश्च तिरोधायान्तर्हितः स च आश्रम एव यथापूर्वं स्थित इति ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीधरस्वामिकृतभावार्थदीपिकायां नवमोऽध्यायः ॥ ९ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने द्वादशस्कन्धीये श्रीसुदर्शनसूरिकृतशुकपक्षीये नवमोऽध्यायः ॥ ९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावदिति । तावद्भगवानचिन्त्यविविधविचित्रसत्याश्चि-गुणगणपूर्णः योगाधीशः आश्चर्यशक्तियोगनिर्वाहकः गुहाशयः सर्वान्तरात्मा अन्तर्हितवान् तदा ऋषेरीहा आलिङ्गनेच्छा यथा अनीशनिर्मिता निर्धनेन कृता तद्वद्वार्थीकृत्यर्थः ॥ ३३ ॥

तमिति । तं तिरोदधतं शिशुमनु लोकसंप्लवं सलिलं तिरोधाय तत्क्षणादस्य मुनेः सकाशाद्वटोऽप्यन्तर्दधे इति पूर्वेण सम्बन्धः । यद्वा, भगवान् सलिलं तिरोधायान्तर्दधे तमनु वटोपि अन्तर्दधे इति सम्बन्धः मुनिस्तु स्वाश्रमे पूर्ववत्स्थितः अल्पदेशे विपुलदेशान्तर्भावः अल्पकाले बहुकालान्तर्भावः तदितरजनादृश्यत्वमिति-रिक्तमूर्तामूर्तपदार्थग्रहहेतुतत्कालावस्थायिसलिलादिसृष्टिरिति सर्वमीश्वरस्य सर्वशक्तित्वादुपपन्नम् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां नवमोऽध्यायः ॥ ९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनीशेनासमर्थेन निर्मिता ईहा मायावसथा चेष्टा यथा विप्रमन्तर्दधाति तथैवमन्तर्धानशैघ्र्यार्थं निदर्शनमिदं न तु मिथ्यार्थे ॥ ३३ ॥

अन्तर्हितं भगवन्तमनु लोकस्य सम्प्लवो यस्मात्तथा तिरोधायि तिरोहितमभूत् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
नवमोऽध्यायः ॥ ९ ॥
( विजयध्वजतीर्थरीत्याऽष्टमः ॥ ८ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
नवमोऽध्यायः ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अनीशो हरिकृतस्य ईहा धनादिवाञ्छा यथा सद्य एवोत्पद्य सद्य एव लीयते तद्वदित्यर्थः ॥ ॥ ३३ ॥

अथाहस्येति । क्षणमात्रकालमध्य एव सप्तकल्पसङ्कुल्पः काव्यः प्रविष्टोऽभूत्तत्कथं भगवच्छक्त्यैवेति भावः । तिरोधायीति कर्मकर्तरि चिण् ॥ ३४ ॥

इति सारार्थदर्शिन्याम् हर्षिण्याम् भक्तचेतसाम् ।
द्वादशे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यावत्परिष्वङ्क्तुमुद्युक्तस्तावत्तस्य एवान्तर्दधे तदा ऋषेः ईहा परिष्वङ्गचेष्टा यथा अनीशेनासमर्थसङ्कल्पेन जीवेन निर्मिता वृथा भवति तथा जाता ॥ ३३ ॥

तं सर्वशक्तिं भगवन्तं कारणमनु तदुपप्रकाशितं वटादि कार्यजातमन्तर्हितमासीदित्याह—तमन्विति । लोकस्य सम्प्लवः प्रलयश्च ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
नवमाऽध्यायार्थप्रकाशः ॥ ९ ॥

---

इतनी ही देर में योगाधीश गुहाशय वे साक्षात् भगवान्, ऋषि के देखते २ तत्काल अन्तर्धान को प्राप्त हो गये, जैसे कि—मन्द भाग्यवाले पुरुष की निष्फल क्रीडा ॥ ३३ ॥

हे शौनक ! तिसके पश्चात् वह वट और जल, और लोकों को जल में डूबना ये सब ऋषि को क्षणमात्र में अन्तर्हित हो गया और ऋषि अपने आश्रम के विषें पूर्ववत् स्थित होगये ॥ ३४ ॥

इति श्रीमद्भागवत द्वादशस्कन्ध में नवम अध्याय की
श्रीवृन्दावनस्थ पं० भागवताचार्यकृत
भाषाटीका समाप्त ॥ ९ ॥

---

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

सूत उवाच ।

स एवमनुभूयेदं नारायणविनिर्मितम् ।
वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥

मार्कण्डेय उवाच ।

प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे ! ।
यन्माययाऽपि विबुधा [१] मुह्यन्ति ज्ञानकाशया ॥ २ ॥

सूत उवाच ।

तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ।
रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥
अथोमा तमृषिं वीक्ष्य गिरिशं समभाषत ।
*पश्येमं भगवन् ! विप्रं निभृतात्मेन्द्रियाशयम् ॥ ४ ॥
[२]निभृतोदझषव्रातं वातापाये यथाऽर्णवम् ।
कुर्वस्य तपसः साक्षात्संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥

श्रीभगवानुवाच ।

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥
अथाऽपि संवदिष्यामो भवान्येतेन साधुना ।
अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥

सूत उवाच ।

इत्युक्त्वा तमुपेयाय भगवान् स सतां गतिः ।
ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् ।
तेन साकमतिप्रीत्या समाभाष्य समाजयत् ॥
॥ १ ॥

ज्ञानकाश्यया ज्ञानवत्प्रकाशमानया [illegible] विना विद्वांसोऽपि यस्य तव मायया ज्ञानिनो वयमित्यहङ्कारेण विमुह्यन्तीत्यर्थः ॥२॥

श्रीनारायण एव स्वमायादर्शनभ्रान्तं शिवरूपेण सान्त्वयामास तदाह—तमेवमित्यादिना । निभृतात्मानं समाहितचित्तम् रुद्राण्या भवान्या ॥ ३ ॥

निभृता निश्चला आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य तम् ॥ ४ ॥

निभृतं निश्चलमुदकं [illegible]

---

(१) मुह्यन्त्यज्ञानकातराः इति वीर० विज० पा० । (२) निभृतोदक्षुब्धवातरुत्पापाये इति च विज० । * पश्यैनं इति वीर० ।

### श्रीवल्लभाचार्यकृतभावार्थदीपिका ।

साक्षात्कुरु प्रकटीकुरु यतो भवान् सिद्धिद: आशिषोऽभ्युदय-लक्षणाः उत निश्चितम् अत्र हेतुः भक्तिमिति ॥ ५।६ ॥

संवदिष्यामः संवादं करिष्यामः ॥ ७ ॥

सर्वाकृतित्वे हेतुः ईशान इति ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मार्कण्डेयस्य तत् कुलप्रसूतत्वे शास्त्रान्तरपरिहारो द्रष्टव्यः एतत् कल्पात् प्रभूतमार्कण्डेयोऽन्यो वाल्मीकिरित्यविरोध उक्तं-स्थित: आपदो निर्मुक्तः ॥ १—१५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं भगवता दत्तं तद्योगमायादर्शनात्मकं वरं प्राप्य ततो रुद्राद्भगवद्भक्तिस्थैर्यमाकल्पान्तमायुस्त्रैकालिकं ज्ञानं त्रिरक्तं ब्रह्मवर्चस्विनां पुराणाचार्यत्वं च लेभ इति वक्तुं प्रस्तौति—स एवमित्यादिना । नारायणेन विनिर्मितमाश्चर्यशक्तैर्वैभवमनुभूय तमेव नारायणमेव तन्मायातरणाय शरणं ययौ ॥ १ ॥

तदेवाह—प्रपन्नोऽस्मीति । प्रपन्नानामभयम् संसृतिभयाभावं प्रयच्छतीति तथा यस्य तव मायया हेतुभूतया यदज्ञानं तेन कातराः विक्षिप्तचित्ताः सन्तो मुह्यन्ति तां तव प्रपन्नोऽस्मीतिभावः ॥ २ ॥

तामिति । इत्थं निभृतात्मानं समाहितचित्तं मुनिं रुद्रो ददर्शेति सम्बन्धः दिव्यन्तरिक्षे ॥ ३ ॥

भवेति । उमा रुद्राणी उक्तिमेवाह—पश्यैनमिति । यथा निभृतं निश्चलम् उदकम् झषव्रातश्च यस्मिन् पारावारोऽपारोऽर्णवः समुद्रः ( तथा क्षीरसागरो वा ) तथा निभृतात्मेन्द्रियाशयं निश्चलदेहेन्द्रियमानसं मुनिं पश्येम अस्य मुनेस्तपसः संसिद्धिं कथं कुरु यतो भवान् संसिद्धिदः ॥ ४।५ ॥

एवमुक्तः प्राह रुद्रः—नेति श्लोकद्वयम् । आशिषः कामान् नापि च मोक्षमप्ययं ब्रह्मर्षिः नैवेच्छति तत्र हेतुः परमेतत्प्रयोजनां भगवति भक्तिं लब्धवान् न हि भगवदेकान्तभक्ताः किञ्चिदपि वाञ्छन्तीति भावः ॥ ६ ॥

तथापि यद्यप्येवं तथापि हे भवानि साधुनाऽनेन मुनिना संवदिष्यामः संवादं करिष्यामः किं तावन्मात्रेण तत्रेत्यत्राह, अयं हीति । नृणामयम् अयमेव परमो लाभः कोऽसौ यत्साधुसमागमः न तस्य लाभः किन्त्वस्माकमेवेति भावः । यद्वा अन्योन्यस्य समागमोऽन्योन्यस्य लाभ इति भावः । नृणामिति सार्वत्रिकनिर्देशो लोकपरिपाटीप्रदर्शनाभिप्रायकः ॥ ७ ॥

इतीति । स भगवान् शङ्करः सतां गतिः सकलविद्यानिवह-कर्मवर्ततिश्वरत्वजगदाश्रयत्वाद्यात्मभूतपरमपुरुषब्रह्मकायितिः विवक्षितानि "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" ( १।१।३१ ) इति न्यायाद्भगवद्विग्रहवतारत्वाद्वा तानि विवक्षितानि ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मार्कण्डेयः पुनः किमकार्षीदित्यतां शृण्वतां हरी भक्ति-समुद्रेककरीति हार्दं शौनकादीनां चोद्यम् परिहरति, स एवमिति । यः पूर्ववत्स्वाश्रमे स्थितः सः योगमायायाः भगवन्माया-विभूतेः वैभवं ऐश्वर्यादि स्वरूपशक्तेः प्रभावं वा ॥ १ ॥

यस्य हरेर्मायया मोहनशक्त्या विबुधा अज्ञानकातरा इति एतद्रूपेणान्योन्यविरुद्धेन मायाशक्तौ व्याख्यात इति ज्ञातव्यम् ॥ २ ॥

निभृतात्मानं पूर्णमनसं हराविव नितरां धृतमनसं वा दिवि व्योम्नि ॥ ३—४ ॥

निभृता ननु, पूर्णं एव तपापाये वर्षाकाले ऋषीणां व्रातो ब्रतसमूहो यस्य स तथा पूर्वविशेषणार्थे हेतुरयम् अस्य मुनेः ॥ ५ ॥

रुद्रः प्रतिवक्ति, नैवेति । मोक्षमपि नेच्छति किमुतान्यत् आशिषः तत्र हेतुमाह भक्तिमिति ॥ ६ ॥

यद्यप्येवं तथापि भवत्या वचनगौरवाद्वतिष्यामहे इत्याशयेनाह—तथापीति । हे भवानीति एतेन साधुना मुनिना सह सङ्कथनेन किं प्रयोजनमत्राह, अयं हीति । साधूनां समागमः सङ्गतिः ॥ ७ ॥

समुपेयाय सम्प्राप अयं साधूनां गतिर्भगवान् किन्तु वेद इत्य प्रवेशायेनाह—ईशान इति । अनेन श्रीहरिज्ञानमपि रुद्र-प्रसादात्फलवत्स्यादित्युक्तं भवति तत्कुत इत्यत्राह, ईश्वर इति श्रोत्रादीन्द्रियवतां जीवानां शिवाधीनत्वेन तदिन्द्रियसाध्यस्य ज्ञानस्यापि तत्प्रसादायत्तत्वं युक्तम् ॥ ८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सोमेशदर्शनं तस्य स्तुतिस्तेनाभिनन्दनम् ।

मुनेः स्वेष्टवरप्राप्तिस्तस्मादुक्तम् उत्सवं ॥

॥ १ ॥

ज्ञानकाशया ज्ञाने वर्तमानेऽपि काशया प्रकाशितुं समर्थयेत्यर्थः । तत्राहुर्मेन, प्रमायामभूत्वमिति भावः ॥ २—४ ॥

निभृतानि निश्चलीभूतानि उदकानि झषव्राताश्च यत्र सः ॥ ५ ॥

(मार्कण्डेयस्य एतत् कुलप्रसूतत्वे शास्त्रान्तरपरिहारो द्रष्टव्यः)

आशिषोऽशिमात्राः सिद्धीः तर्हि मोक्षं देहीति तत्राह—मोक्षमपीति तर्हि भक्तिं देहीति तत्राह भक्तिमिति ॥ ६—७ ॥

सताम् अभीप्सितभक्तिप्रदायित्वाद्गतिः न केवलं सतामेव गतिरपि तु सकामानामपीत्याह—ईशान इति । नात्र चित्रमित्याह—ईश्वर इति ॥ ८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं भगवद्योगमायावैभवदर्शनं भगवत्प्रसादान्मार्कण्डेयेन लब्धम् अथ दशमे शिवप्रसादलब्धं तद्वक्तुं प्रस्तौति, स एवमित्यादिना । योगमायायाः अत्याश्चर्यरूपायाः भगवच्छक्तेः ॥ १ ॥

ज्ञानकाशया ज्ञाने यद्यपि प्रकाशमानया ज्ञानवतामपि मोहजनकया इत्यर्थः ॥ २ ॥

तयोरागमनं साक्षादीशयोर्जगदात्मनोः ।
न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥
भगवांस्तदभिज्ञाय गिरिशो योगमायया ।
आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥
आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम् ।
त्र्यक्षं दशभुजं प्रांशुमुद्यन्तमिव भास्करम् ॥ ११ ॥
(१)व्याघ्रचर्माम्बरधरं शूलखट्वाङ्गचर्मभिः ।
अक्षमालाडमरुककपालासिधनुःसह ॥ १२ ॥
बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः ।
किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ १३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिवि अन्तरिक्षे ॥ ३ ॥

निभृता नियमिताः आत्मेन्द्रियाशयाः शरीरेन्द्रियमनांसि येन तम् ॥ ४ ॥

निभृतं निश्चलमुदकं झषव्रातः मीनसमूहो यस्मिन् सः संसिद्धिं साक्षात्कुरु प्रकटीकुरु ॥ ५ ॥

आशिषः सिद्धीः ॥ ६ ॥

तथापि एषाम् संवादं करिष्यामः ॥ ७ ॥

इत्युक्त्वेत्यादिग्रन्थे श्रीरुद्रस्य भगवत्त्वं सर्वदेहिनामीशत्वं सर्वात्मत्वादिकं च श्रीविष्णुप्रसादजं ज्ञेयम् सोऽब्रवीद्वरं वृणीष्व "अहमेव पशूनामधिपतिरसानि" "अस्य देवस्य मीढुषो वयो विष्णोरेष" इत्यादिश्रुतेः "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इत्यादिप्रागुक्तत्वाच्च भगवान्—

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" ॥

इत्युक्तलक्षणः सतां साधूनां हरिभक्तप्रदत्वाद्गतिः सर्वदेहिनां सुरासुरादीनामीश्वरो नियन्ता ॥ ८ ॥

---

भाषा टीका ।

सूत उवाच ॥

सूतजी बोले, कि—वह मार्कंडेय ऋषि नारायण के रचे हुए, योग माया के वैभव को इस प्रकार देखकर उनही श्रीनारायण की शरण जाते हुए ॥ १ ॥

मार्कंडेय उवाच ।

मार्कंडेयजी बोले कि—हे हरे ! प्रपन्नजनों के अभय देने वाले आपके चरणों की मैं शरण आया हूं, ज्ञानबल प्रकाशमान जिनकी माया से विद्वान् लोग भी मोहित होते हैं ॥ २ ॥

सूत उवाच ॥

सूतजी बोले, कि—श्रीपार्वतीजी सहित वृषभ के ऊपर बैठे हुए आकाश मार्ग में होकर अपने गणों सहित श्रीशिवजी आ रहे थे, उन्होंने, नारायण की शरण प्राप्त होने से इस प्रकार चित्त समाहित करके बैठने वाले मार्कंडेय ऋषि को देखा, ॥ ३ ॥

तदनन्तर श्रीपार्वतीजी ने उस ऋषि को देखकर श्रीशिवजी से कहा, कि—हे भगवन् ! अपने इन्द्रिय और अन्तःकरण का समाधान करके बैठे हुए इस विप्र को तो आप देखो ॥ ४ ॥

जैसे, कि-पवन के अभाव काल में जल और जल जंतु जिसके स्थिर होजाते हैं, ऐसे समुद्र के तरह स्थिर होकर बैठा है । हे भगवन् ! इसके तप की सिद्धि आप करो, क्यों कि, आप साक्षात् सिद्धि देने वाले हो ॥ ५ ॥

श्रीभगवान् उवाच ॥

श्रीमहादेवजी बोले, कि-हे देवि ! यह ब्रह्मर्षि लौकिक मनोरथों को तो क्या, परन्तु मोक्ष की भी इच्छा नहीं करता है क्यों कि—अव्यय पुरुष जो साक्षात् भगवान् हैं तिनके विषे इसको भक्ति प्राप्त हुई है ॥ ६ ॥

हे भवानि ! तो भी हरिभक्त इस सत् महात्मा से सम्वाद ही करेंगे । क्योंकि ? पुरुषों को इस संसार में यही परम लाभ है, कि—जो साधुजन का समागम प्राप्त हो ॥ ७ ॥

सूत उवाच ॥

सूतजी बोले, कि—इस प्रकार श्रीपार्वतीजी से कहकर भगवान् सन्तों के गति श्रीमहादेवजी, ऋषि के समीप पधारे । आप कैसे है, कि—विद्याओं के अधिपति और सर्व प्राणियों के नियन्ता हैं ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

रुद्धा धियोऽन्तःकरणस्य वृत्तयो येन सः ॥ ९—१० ॥

---

(१) व्याघ्रचर्माम्बरशूलधनुरिष्वसिचर्मभिः । अक्षमालाडमरुककपालं परशुं सह ॥ इति सिद्धा० ॥

नमः शिवाय शान्ताय सत्त्वाय प्रमृडाय च।
रजोजुषेऽथ घोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥

सूत उवाच।

एवं स्तुतः स भगवानादिदेवः सतां गतिः।
परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥ १८ ॥

श्रीभगवानुवाच।

वरं वृणीष्व नः कामं वरदेशा वयं त्रयः।
अमोघं दर्शनं येषां मर्त्यो यद्विन्दतेऽमृतम् ॥ १९ ॥
ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः।
एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ २० ॥
सलोका लोकपालास्तान् वन्दन्त्यर्चन्त्युपासते।
अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

न केवलं तयोरागमनं चेद् अपितु आत्मानमहन्ताद्यपदं विश्वमिदङ्काराद्यपदं च ॥ ९—१३ ॥

सोमया स मार्कण्डेयः उमया सह "सोऽविज्ञोपचेत्पादपूरणम्" (८।१।३४) इति सोलोपः ॥ १४—१६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अनहङ्कारमनोः जगतामात्मप्रियर्याः ॥ ९—११ ॥

शूलादिभिः सहाक्षमालादीन् ॥ १२ ॥

विप्राणाम् प्रमथादीनां सुन्दरम्। सः मार्कण्डेयः उमया सह आगतं ददर्श ॥ १३—१५ ॥

निर्वृतं सुखितम् ॥ १६ ॥

---

भाषाटीका।

अब श्रीमहादेवजी आये उस समय मार्कण्डेय समाधि में लीन होने से रुद्धअन्तःकरण की वृत्ति वाले थे, अत एव आप का और विश्वका भी उनको भान न था, इसी से जगदात्मा साक्षात् श्रीभवानी और शंकर के आगमन को भी ऋषि ने नहीं जाना ॥ ९ ॥

भगवान् श्रीकैलासवासी शिवजी इस बात को जानकर अपनी योग माया के बल से ऋषि के हृदयाकाश में घुस गये, जैसे वायु छिद्र में प्रवेश करे ॥ १० ॥

तब तो ऋषि ने आत्मा में बिजुली सी पीली जटाओं को धारण किये, तीन नेत्र और दशभुजाओं को धारण किये, बड़े उन्नत, उदय को प्राप्त होने वाले भास्कर के सदृश श्रीशिवजी को समाधि में ही देखे ॥ ११ ॥

कैसे देखे, कि—व्याघ्रचर्म का वस्त्र पहिने, त्रिशूल, धनुष, बाण, खड्ग, ढाल, इन सहित रुद्राक्ष माला, डमरू, कपाल, परशु इन सबों को धारण किये ॥ १२ ॥

ऐसे महादेवजी को एका एकी हृदय में भास होते हुए देखकर ऋषि बड़े विस्मय को प्राप्त हुए, "यह क्या है, और कहां से आये" ऐसे विचार कर मुनि समाधि से विरत होगये ॥ १३ ॥

और नेत्र उघाड़ कर गणों सहित और पार्वतीजी सहित त्रिलोक के एक गुरु श्रीरुद्र को देखकर मुनि शिर से नमस्कार करते हुए ॥ १४ ॥

गणों सहित और पार्वतीजी सहित उन श्रीमहादेवजी की स्वागत कुशल पूछकर, आसन पाद्य अर्घ्य चन्दन माला धूप दीप इत्यादि उपचारों से ऋषि पूजा करते हुए ॥ १५ ॥

और ऋषि बोलते भी हुए, ऋषि बोले—कि हे विभो! अपने प्रभाव से पूर्णकाम जो आप हो आपका मैं क्या उपकार करूं, हे त्रिलोक के नियामक! आप से यह सब जगत् सुख को प्राप्त होता है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति—नमः शिवाय निर्गुणाय सत्त्वाय सत्त्वाधिष्ठात्रे अत एव प्रमृडयति सुखयतीति तथा तस्मै ॥ १७ ॥ १८ ॥

नोऽस्मत्तः त्रयो ब्रह्मविष्णुमहेश्वराः यतोऽस्य ते त्वम् ॥ १९ ॥

सत्कारादिना भवत्सेवैवास्माभिः क्रियते नत्वनुग्रहो अस्मत्कृपाद्भवतामिति ब्राह्मणानस्तौति—ब्राह्मणा इत्यादि। ये साधवः सदाचाराः शान्ता मत्सरादिरहिता निःसङ्गा निष्कामाः ॥ २० ॥

न केवलं त एव किन्त्वहं चेत्यादि ॥ २१ ॥

न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ।
नाऽऽत्मनश्च जनस्यापि तद्युष्मान्वयमीमहि ॥ २२ ॥
न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः ।
ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः ॥ २३ ॥
ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ।
बिभ्रत्यात्मसमाधानं तपःस्वाध्यायसंयमैः ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

पूज्यतमत्वे हेत्वन्तरमाह—नेति । भगवत्यणुमात्रमपि न चक्षते न पश्यन्ति तस्मात्तदेवंभूतान् युष्मान् ईमहि भजेम ॥ २२ ॥ २३ ॥

ब्राह्मणेभ्यो ब्राह्मणान् आत्मसमाधानं चित्तैकाग्र्यम् तप आलोचनम् स्वाध्यायोऽध्ययनम् संयमो वागादिनियमस्तैः ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न ते मयीति अजे मयि चाच्युते ब्रह्मशरीरके मयि, अच्युते इत्यर्थः "स ब्रह्मा स शिवः" इति श्रुतिः भगवतः सर्वान्तरात्मत्वात् भेदनिषेधस्यान्तरात्मत्वनिबन्धनत्वमेव स्फुटीकृतं नात्मनः जनस्यापीति नाहमेवं च वक्ष्यत इत्यन्वयः ॥ २१—२८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतो न किञ्चित्करवामातः केवलमञ्जलिमात्रं करवामेत्यभिप्रेत्य प्रणमति—नम इति शिवाय लोकमङ्गलकराय शान्ताय सिंधर्ष्टकरहिताय प्रमृडाय प्रकर्षेण मृडयति सुखयतीति प्रमृडस्तस्मै सत्त्वाय शुद्धसत्त्वमयशरीरविष्णुरूपायेत्यर्थः । रजोजुषे ब्रह्मरूपाय तमोजुषे प्रकृतरुद्ररूपाय अतएव घोराय घोररूपाय तुभ्यं नमस्करोमीत्यर्थः ॥ १७ ॥

इत्थं मार्कण्डेयेन स्तुतो रुद्रस्तं भाषत इत्याह सूतः, एवमिति । प्रसन्नात्मा प्रसन्नचित्तः स भगवान् रुद्रः ॥ १८ ॥

भाषणमेवाह—वरमिति सप्तभिः । भद्रमस्तु (तोऽस्त्वपि)कामं यथेष्टं वरं वृणीष्व यतो वयं त्रयः ब्रह्मविष्णुरुद्राः वरदेशाः वरदश्रेष्ठाः न मे किञ्चिदपेक्षितमित्यत आह, अमोघमिति । येषां त्रयाणामस्माकं दर्शनममोघमव्यर्थम् अतो यत्किञ्चिद्वृणीष्वेति भावः । तर्हि अमृतत्वं दातुमर्हसि प्रभवसि किमित्यत्राह—मर्त्यो यद्यस्त्वतेऽमृतमिति । यत् येऽपि अस्मत्तोऽमृतं मोक्षं विन्दते सन्तुष्टकोपासनीयामिति भावः । साक्षाद्भगवदुपासकस्यापि ब्रह्मरुद्रयोः श्रीभगवद्विभूतित्वानुसन्धानस्यावश्यकत्वात् ॥ १९ ॥

यथा मुनिः शान्तस्वरूपा आत्मानं तुष्टाव तथा स्वयमपि तद्गुणस्तुत्या ब्राह्मणान्स्तौति—ब्राह्मणा इति द्वाभ्याम् । ये साधुत्वादितद्गुणयुक्ता ब्राह्मणास्तान् स लोका लोकपाला इन्द्रादयः वन्दन्त्यर्चयन्त्युपासते इति सम्बन्धः साधुलक्षणाविवक्षया ब्राह्मणान् विशिनष्टि शान्ताः रागाद्यकलुषितचित्ताः निःसङ्गाः विषयसङ्गरहिताः एकान्तभक्ता इत्यस्य भगवतीत्यादि शेषम् अस्मासु रुद्रादिषु निर्वैराः श्रीभगवद्विभूतित्वानुसन्धानेन वैररहिताः, कुतः? भूतवत्सलाः सर्वभूतेषु वात्सल्ययुक्ताः किं बहुना समदर्शनाः कृत्स्नस्यापि जगतो भगवद्विभूतित्वानुसन्धानेन समबुद्धयः ॥ २० ॥

सलोकाः देवमनुष्यादिजनसहिताः लोकपाला इन्द्रादयः किं बहुना वर्णनेनेत्याह—वयमिति । वयमपि त्रयः रुद्रादयः तान् वन्दामहे अर्चयामहे उपास्महे चेत्यर्थः ॥ २१ ॥

तत्र हेतुमाह—नैते इति । एते साधवो ब्राह्मणाः नते इति पाठे ते ब्राह्मणाः अजे अच्युते मयि चाच्युते चेत्यन्वयः । ब्रह्मशरीरके मच्छरीरके चाच्युते इत्यर्थः । अणवपि ईषदपि, यथा तथा भिदां भेदं न चक्षते न पश्यन्त्यजं मां चाच्युतात्पृथक्सिद्धं न पश्यन्तीति विवक्षितार्थः "स ब्रह्मा स शिवः सेन्द्रः" इत्यादिश्रुत्या श्रीभगवतो ब्रह्मादिशरीरकत्वेन शरीरात्मनिबन्धनसामानाधिकरण्यावगमात्परस्त्रभेदस्यानिषेध्यत्वात्स्वातन्त्र्यभेददर्शनमेवात्र निषिध्यते इममर्थं स्वयमेव स्फुटीकुर्वन्नाह, नेति । आत्मनः स्वस्य जनस्य स्वेतरस्य चापि अच्युते भिदां न चक्षते इत्यन्वयः । आत्मजनशब्दाभ्याम् अखिलसंसृतजीवा उच्यन्ते न हि तैः सह ब्रह्मणः स्वरूपाभेदो ऽभेदवादिनोऽपि सम्मतः अविशेषेण तादात्म्यस्य तन्मतेऽप्यनिष्टत्वात् हि जनशब्दश्चेतनस्वारसिकः येन तत् स्वरूपाभेदः सिद्ध्येत अतोऽविशेषेण यादृशो भेदनिषेधः स्वातन्त्र्यविषयस्तादृश एव विशेषेणापीति विक् यतो भिदां च न चक्षते तत्तस्माद्वयमपि युष्मानीमहि भजाम तत्र सलोका लोकपाला अहं ब्रह्मा चेति वयं भगवद्विशेषाधिष्ठानत्वबुद्ध्या युष्मान्भजाम अच्युतस्तु "ज्ञानी त्वात्मैव मे मतम्" इति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्युक्ताभिसन्धिविशेषेण भजतीति विशेषणा इति भावः ॥ २२ ॥

तद्दर्शनेनात्मनः कृतकृत्यतामभिप्रेत्य स्तौति—नहीति । अम्मयानि जलमयानि तीर्थानि न दर्शनमात्रतः पुनन्ति किन्तु चिरं स्नानादिभिस्तानि पुनन्ति, तथा मृच्छिलामयाः देवाः प्रतिकृतयश्च न दर्शनमात्रतः पुनन्ति चिरमावाहनादिषोडशोपचारपूजादिभिरिति भावः । यूयं दर्शनमात्रेण पुनीथेति विशिष्टास्तीर्थेभ्यो यूयमिति भावः ॥ २३ ॥

अथातेन "नमः शिवाय" इत्यादिना नमस्कृतं तथा स्वयमेव प्रणमति-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ब्राह्मणोऽस्य इति । नमस्यामः नमस्कुर्मः नात्विषिनाद्य, ये ब्राह्मणाः त्रयीमयं ( वेद ) त्रयीप्रचुरमात्मसमाध्यादिभिः सहितं रूपं बिभ्रति स्मेति विस्मये ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्त्वाय पराक्रमयुक्ताय सद्ब्रह्म शरणं याति गच्छतीति सात्वतस्मै वा प्रभूताय प्रकृष्टपालाय सत्त्वस्तुयोग्यतानुसारेण रक्षार्थं सत्त्वादिगुणप्रवर्तकत्वात्सत्त्वाय रजोजुषे इत्युक्तम् ॥ १७ ॥ १८ ॥

अपो ब्रह्मादयो येषां अपाणां दर्शनममोघं तत्र हेतुमाह, मर्त्यं इति । मर्त्योऽमृतं मुक्तिं विन्दते यदस्माद्दर्शनात् येभ्योऽमृतं वा ॥ १९ ॥

ब्राह्मणभक्तिं दर्शयति—ब्राह्मणा इति । ब्राह्मणा ब्रह्मवादैकनिष्ठाः साधवो रागादिदोषविधुराः शान्ताः भगवन्निष्ठापारङ्गताः अत एव निःसङ्गाः दुष्टसङ्गरहिताः अत एव भूतेषु सज्जनेषु वत्सलाः स्निग्धा एकान्तेन विष्णुरेव सर्वोत्तमो नान्य इति निर्णयेनास्मासु भक्ताः योग्यतातिरेकेण वैरशून्याः धर्मं ब्रह्म तद्धर्मं येषां ते तथा ॥ २० ॥

य एवंविधांस्तान्वदन्ति स्तुवन्तीत्यादिसपर्यां कुर्वन्त इत्यर्थः । अहं ब्रह्मा च हरेः पृथक् स्वतन्त्रौ न तदधीनावेव तत्र हेतुरीश्वर इति ईश्वरौ ईशौ रूपः स्वातन्त्र्यतयोर्वर ईशानाद्वर इति यस्मात्तस्मात् अयोर्वर इत्युक्तम् एवं के इत्यतो वाह, महमिति । स्वयमित्यनेन हरेरेव स्वातन्त्र्यं नावयोरावां तदधीनावेवेति स्पष्टमुक्तम् अत्राप्ययमेव हेतुरीश्वर इति "ईश ऐश्वर्ये" इति धातोरनुपहतैश्वर्यमूर्तित्वादीश्वर इत्युच्यते ॥ २१ ॥

इतोऽपि ब्राह्मणा एव पूज्या यत एवंविधं तत्त्वं त एव जानन्तीत्याह—नत इति । ते ब्राह्मणा मयि स्थिततत्त्वात्मयीत्युच्यमाने हराविजे च स्थिततत्त्वाद्वजाद्याद्ये च पृथक् स्थिते अच्युते च भिदामण्वपि परमाणुमात्रमपि न चक्षते न पश्यन्ति । किं च जनस्य जननवतः स्थावरजङ्गमरूपस्य प्रपश्यन्ति । किं च अनस्य आत्मनोऽन्तर्यामिणाश्च भिदां न पश्यन्ति अपितु चैन "एको देवः" इति श्रुतिं प्रमाणयति । तस्मादयम् युष्मानखिलैः पूज्यादीनीमहि युष्मामहे यद्वा, मयि भिदामन्यथाज्ञानं विष्णुत्वमिति किञ्चित्स्वाम्येनापि न पश्यन्त्यपितु ततो विलक्षणत्वेन सत्कटाक्षाहितत्वाधिकत्वेन जगत्संहर्तृत्वेन ततोऽनन्तांशहीनत्वेनैव मत्तत्त्वं पश्यन्ति चतुर्मुखे यथास्थितं पश्यन्ति । अच्युते च तथा स्वाधश्रुतिविहितमात्मनश्चेतनसमुदायस्य जन्यत इति जनो देवस्तवादिजडस्यापि तत्त्वं यथातथा अन्यथा न पश्यन्ति ॥ २२ ॥

सर्वस्माच्छुद्धिहेतुत्वाच्च ब्राह्मणा एव पूज्या इत्याह, नहीति ॥ २३ ॥

अस्माभिश्च तस्माद्व्यवस्थाच्छ्रिप्रा एव श्रेयांश इत्याह, ब्राह्मणोऽस्य इति । त्रयीमयं वेदमुख्यप्रतिपाद्यम् आत्मनि सम्यगाधानं अवधानं सन्निधानलक्षणं यस्य तथा तप आलोचनम्



स्वाध्यायोऽध्ययनं संयमो यागादिनियमस्तैर्बिभ्रति "आचारहीनं न पुनन्ति वेदाः" इत्यतस्तप इत्यादि ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्राह्मणा इति । यतस्ते सम्यग्दर्शनात्तस्मात् मदादिषु वा भिदां वर्तते तामण्वपि यथास्यात्तथा न चक्षत इति सत्यमेव किन्तु, तत्त्वेऽप्यपि युष्मान् इत्यैकान्तभक्तान् वयमीमहि प्रियत्वेन जानीम इत्यर्थः । तदुक्तं तेनैव चतुर्थे "अथ भागवता यूयं प्रियाः स्थ भगवान् यथा । न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित्" इति अभेदश्चेत्तर्हि मार्कण्डेयस्य तदनुभवे समाधिविरतिर्न स्यात् अत्रासद्दृष्टरुद्रेणापि स्वयञ्च हरिरीश्वर इत्यनेन हरेरेव प्राधान्यमुक्तं तस्यैव स्वयमीश्वरत्वं चोक्तं प्रथमस्कन्धे "पार्थिवाद्दारुणो धूमः" इत्यादि ब्रह्मपुराणे शिववाक्यमपि तथा—

> यो हि मां द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम् ।
> द्रष्टव्यस्तेन भगवान् वासुदेवः प्रतापवान् ॥"

इति परब्रह्मरूपस्य तस्य विज्ञानेन सर्वविज्ञानादिति भावः ॥ २०—२२ ॥

नहीति । देवा इन्द्रादिप्रतिमा नतु भगवत्प्रतिमा युष्माभिरप्याराध्यत्वादिति भावः ॥ २३ ॥

नमस्कारे हेतुः—यस्मादिति । त्रयीमयं वेदलक्षणम् उपकारत्वादिति भावः ॥ २४—२५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नोऽस्मत्तः यद् येऽङ्घ्रयः ॥ १७—१९ ॥

ये ब्राह्मणा अस्मास्वेकान्तभक्तास्तान् लोकपाला एव वन्दन्ते ॥ २० ॥

न केवलं लोकपाला एव वन्दन्ते किन्त्वहं चेत्यादि ॥ २१ ॥

अण्वपि अणुमात्रमपि न चक्षते न पश्यन्ति यथैवास्मासु भेदं न पश्यन्ति तथैवात्मनः स्वस्य जनस्यापि सुखदुःखादिषु भेदं न पश्यन्ति, तस्मादेवंभूतान् युष्मान् ईमहि भजेम ॥ ॥ २२—२३ ॥

आत्मसमाधानं विष्णुध्यानम् ॥ २४—२५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रकर्षेण मृडयति सुखयतीति स तथा ॥ १७—१८ ॥

नोऽस्मत्तः यत् येऽङ्घ्रयः ॥ १९—२१ ॥

साधुत्वादयः समदर्शित्वान्ताः ब्राह्मणानां सर्वपूज्यत्वे हेतव उक्तास्तत्र समदर्शित्वं प्रपञ्चयति—नेति । ते ब्राह्मणाः साधुत्वादिधर्मवन्तः मयि अजे चकाराद्रुद्रादिषु आत्मनः क्षेत्रज्ञस्य जनस्य अपि च प्रकृतिकार्यस्य सर्वस्य कार्यकारणस्य च अच्युते जगत्कारणे भगवति अण्वपि भिदां न चक्षते पश्यन्ति चेतनाचेतनब्रह्मपदार्थानामल्पज्ञत्वजडत्वसर्वज्ञत्वादिभिः तत्तत्स्वाभाविकधर्मैः स्वरूपेण भिन्नत्वेऽपि तत्पृथक् स्थितिप्रवृत्त्यभावात्

श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः ।
शुध्येरन्नन्त्यजाश्चापि किमु सम्भाषणादिभिः ॥ २५ ॥

सूत उवाच ।

इति चन्द्रललामस्य धर्मगुह्योपबृंहितम् ।
वचोऽमृतायनमृषिर्नातृप्यत्कर्णयोः पिबन् ॥ २६ ॥
स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम् ।
शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत् ॥ २७ ॥

ऋषिरुवाच ।

अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम् ।
यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः ॥ २८ ॥
धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् ।
आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च ॥ २९ ॥
नैतावता भगवतः स्वमायामयवृत्तिभिः ।
न दुष्येतानुभावस्तैर्मायिनः कुहकं यथा ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अभिन्नत्वमित्यर्थः "स ब्रह्मा स शिवः सेन्द्रः' 'अयमात्मा ब्रह्म' सर्वं खल्विदं ब्रह्म" इत्याद्या श्रुतयोऽत्रानुसन्धेयाः तत्तस्मात् वयं युष्मानिमहि भजेम ॥ २२-२५ ॥

---

भाषा टीका ।

शिव, शान्त, सत्वमूर्त्ती, प्रमुड, रजोगुण को सेवन करनेवाले होकर भी अघोर, एसे तमोगुण के सेवन करने वाले आपको नमस्कार हो ॥ १७ ॥

सूत उवाच ॥

सूतजी बोले कि—आदि देव सन्तों के गति भगवान् महादेवजी इस प्रकार स्तुति करने से ऋषि के ऊपर परितुष्ट और प्रसन्न चित्त होकर हंसते हुए ऋषि से बोले ॥ १८ ॥

श्रीभगवान् उवाच ॥

श्रीमहादेवजी बोले कि—हे मुने ! तुम हमसे यथेष्ट वर मांगो हम तीनों देव वर देने वालों के ईश हैं, और हम तीनों का दर्शन अमोघ है, क्योंकि १ मनुष्य हम लोगों से अमृत मोक्ष को प्राप्त होता है ॥ १९ ॥

जो ब्राह्मण साधु शांत निःशंक भूतवत्सल और निर्वैर हैं वे हम तीनों के एकांत भक्त होकर समदर्शी रहते हैं २० लोकपालों सहित सब लोक उनका वंदन करते हैं, अर्चन करते हैं, और उपासना करते हैं, वे तीन कौन हैं कि—मैं और भगवान् ब्रह्माजी और स्वयं ईश्वर साक्षात् श्रीहरि ये हैं॥ २१ ॥

वे भक्त जन मेरे विषैं अच्युत के विषे तथा ब्रह्माजी के विषैं अणुमात्र भी भेद नहीं देखते, एवं अपना और मनुष्यों का भी भेद नहीं देखते तस्मात् तुम्हारे सदृश भक्तजनों को हम भजते हैं ॥ २२ ॥

जलमय तीर्थ, और प्राणवायु के सम्बन्ध रहित एसे देवमूर्त्ति, ये दोनों सेवन करने से बहुत काल में पवित्र करते हैं, और आप लोग तो दर्शन मात्र से ही पवित्र करते हैं ॥ २३ ॥

हम ब्राह्मणों को नमस्कार करते हैं, जो ब्राह्मण चित्त का समाधान कर तप स्वाध्याय और संयमों से त्रयीमय जो हमारा रूप है तिसको धारण करते हैं ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च, श्रवणादित्यादि ॥ २५ ॥

चन्द्रो ललामो भूषणं यस्य तस्य धर्मरहस्ययुक्तममृतास्पदं वचः कर्णाभ्यां पिबन्नातृप्यदलमिति नामन्यत कर्णयोरमृतायनमिति वाऽन्वयः ॥ २६ ॥

शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुञ्जो यस्य सः ॥ २७ ॥

इयं लीला दुर्विभाव्याऽवितर्क्या यद्यया ईशितव्यानि नियम्यानि यानि भूतानि तानि जगदीश्वराः स्वयं नमन्ति स्तुवन्ति चेति ॥ २८ ॥

सृष्ट्वेदं मनसा विश्वमात्मनाऽनुप्रविश्य यः ।
गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग्यथा ॥ ३१ ॥
तस्मै नमो भगवते त्रिगुणाय गुणात्मने ।
केवलायाऽद्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथवा लोकसङ्ग्रहमात्रमेतदित्याह—धर्ममिति । प्रवक्तारोऽपि यद्वत् स्वयं देहिनां धर्मं ग्राहयितुमाचरन्ति ॥ २९ ॥

नन्वेतत्स्वप्रभावतिरस्कारकं कथं मया क्रियते ? तत्राऽऽह, नैतावतेति । एतावता लोकसङ्ग्रहमात्रेण तैर्नमनादिभिः कथम्भूतैः स्वमायामयी वृत्तिर्येषु तैर्भगवतो मायिनस्तवानुभावो न दुष्येत यतः प्रसिद्धस्य मायिनः कुहकं कपटं यथा तथा एतानि नमनादीनि भवन्तस्तथा कुहकेऽस्मानुभावो न दुष्यति तद्वत् प्रभुस्तेऽनुभाव इति पाठे नकारस्य दृष्टान्तेऽप्यनुषङ्गः ॥ ३० ॥

मायाचेष्टितं प्रपञ्चयति—सृष्ट्वेति । स्वप्नदृग्यथैवाविद्याचेष्टितेन ईक्षते ॥ ३१ ॥

त्रिगुणत्वेऽपि न जीववदभिभूताय किन्तु गुणानामात्मने नियन्त्रे ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मायामयवृत्तिभिः आश्चर्यचेष्टाभिः ॥ २९ ॥

शास्त्रदृष्ट्या भगवदात्मकत्वं मन्वान आह-सृष्ट्वेदमिति । सृष्ट्वा दिवत् स्वप्नदृग्यथेति स्वाप्नपदार्थादिकुर्वन्निव स्थितः कर्मानुगुणैः कर्मपरिणामिभिर्गुणैः विषमसृष्टिं कुर्वद्भिः कुर्वन्निवाभातीर्थः ॥ ३० ॥

ब्रह्ममूर्तये वेदनिर्वाहकाय ज्ञानप्रवर्तकाय वा ॥ ३१—३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

येषां च दर्शनश्रवणादर्शनाच्छ्रवणाच्च महापातकिनोऽन्त्यजाश्च विशुद्ध्येरन् सम्भाषणादिभिः विशुद्ध्येरन्निति किमु वक्तव्यम् तेभ्यो ब्राह्मणेभ्यो नमस्याम इति सम्बन्धः ॥ २५ ॥

इतीति चन्द्रो ललामं भूषणं यस्य तस्य रुद्रस्यैर्थभूतं धर्मगुह्योपबृंहितं सांख्यात्मकधर्मरहस्ययुक्तं कर्णयोरमृतायमानं वचः पिबमानुष्यत् कर्णाभ्यां पिबन्वा ॥ २६ ॥

स इति । स मुनिः विष्णोर्मायया आश्चर्यशक्त्या चिरं भ्रमितः अत एव नितरां कर्शितश्च शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुञ्जः भ्रमणप्रयुक्तक्लेशसमुदायो यस्य सः तं शिवम् इदं वक्ष्यमाणमब्रवीत् ॥ २७ ॥

तदेवाह-सप्तभिः अहो इति । यदुक्तं "वरं वृणीष्व" अमोघं दर्शनं येषाम्" इति तत्र तदनुमानाय किञ्चित्प्रार्थयितुमिच्छुस्तावद्वोर्कं "ब्राह्मणाः साधवः" इत्यादिना तथा "यदस्परं भावयन्तः श्रेयः परमवाऽस्यथ" इत्युक्तरीत्या स्वयमप्याह—अहो इति पञ्चभिः । इयमीश्वराणामीश्वरविभूतिभूतानां चर्या चेष्टा शरीरिणां दुर्विभाव्या दुर्विज्ञेया दुर्विभाव्यतामेव प्रकटयति यद्यतः स्वयं जगदीश्वराः जगत्प्रकृष्टाः अपीशितव्यान्यपकृष्टानि भूतानि नमन्ति स्तुवन्ति चेत्यात्मनो नैच्यमनुसंहितम् इत्थम्भूतेव हि भागवतानां परिपाटी ॥ २८ ॥

कुतस्तर्हीशितव्यप्रणामादावभिप्राय इति विचार्य निश्चित्याह—धर्ममिति । देहिनां प्रवक्तारः धर्मोपदेष्टारोऽपि धर्मं ग्राहयितुं प्रायशोऽनुतिष्ठन्ति क्रियमाणं धर्मं तत्कर्तारं वा अनुमोदन्ते अभिनन्दन्ति स्तुवन्त्यभिनन्दनं सन्तोषः ॥ २९ ॥

नैतावतेति । यद्यप्येवमथाप्येतावता आचारानुमोदनस्तुतिमात्रेण तैरीशितव्यप्रणामस्तुत्यादिभिश्च कथम्भूतैः भगवतः पूज्यस्य स्वमायामयावृत्तिराश्चर्यमयी चेष्टा येषु तैः प्रभावो न दुष्येत न विहन्येत यथा मायिनः लोकप्रसिद्धमायाविनः कुहकैच्छद्मव्यापारैस्तस्य प्रभावो न दुष्येत न विहन्येत प्रत्युत स्वमायाविस्मरूपप्रभावाविष्कारः तद्वत् ॥ ३० ॥

शास्त्रदृष्ट्या भगवदात्मकत्वं मन्वानः सर्वेकारणत्वादिभिर्विशिंषन्प्रणमति—सृष्ट्वेति द्वाभ्याम् । यो मनसा सङ्कल्पमात्रेणेदं जगत्सृष्ट्वा आत्मना स्वेनान्तःप्रविश्य कुर्वद्भिः पूर्वकर्मवासनानुगुणपरिणामभिरुत्तरोत्तरपुण्यापुण्यात्मकाविषमसृष्टिं कुर्वद्भिर्गुणैः स्वयं कर्तेवाभाति इवशब्देन परमार्थतः पुण्यापुण्यात्मककर्मकर्तृत्वाभावः परमात्मनि सूच्यते जीवस्यैव तत्र कर्तृत्वात् अकर्तुरपि कर्तृत्वाभासे दृष्टान्तः—स्वप्नदृग्यथेति । न हि स्वप्नार्थसृष्टिकर्ता स्वप्नं दृश्यपितु तत्कर्मानुगुणतत्तत्कालानुभाव्यतत्कालमात्रावस्थायि स्वाप्नप्रपञ्चस्रष्टा परमपुरुषरूपः "न तत्र रथा न रथयोगा" इत्यारभ्य "सृजते स हि कर्तेति य एषु सुप्तेषु जागर्ति कामं पुरुषो निर्मिमाणः तद्ब्रह्म" इति च श्रवणात् यथा स्वप्नार्थसृष्टिकर्मात्मकत्वेऽपि तदनभिज्ञानां तस्याजीवकर्तृकत्वाभिमानस्तथा पुण्यापुण्यकर्तृत्वादेर्जीवगतत्वमजानतां आत्मापृथक्जीवभावेन तत्कर्तृत्वाभिमानमात्रमिति विवक्षितार्थः ॥ ३१ ॥

तस्मै इति । त्रिगुणाय त्रैगुण्यनियन्त्रे महात्मने अप्रतिहतसङ्कल्पाय केवलाय निरस्तनिखिलदोषायाद्वितीयाय स्वतुल्यवस्त्वन्तररहिताय ब्रह्ममूर्तये वेदनिर्वाहकाय रूपतोऽपि त्रिमूर्तये वा ॥ ३२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न केवलं दर्शनाच्छुद्धिरपि तु श्रवणादपीति समुच्चयस्याह—श्रवणादिति । तद्वधिकशुद्धिः कस्मादिति तत्राह किञ्चिदिति भाविपदेन नामस्मरणं गृह्यते ॥ २५ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चन्द्रललामस्य चन्द्रशेखरस्य धर्मगुह्योपबृंहितं धर्मरहस्य-गूढम् अमृतायनम् अमृतवद्वर्तमानं कर्णयोर्हितम् ॥ २६ ॥

शमितः समाधिः सङ्क्षालितः अतएव कर्षितः अनेन संयमिनां समाधेरन्यत्सुखं नास्तीति ज्ञापितम् ॥ २७ ॥

इयं वाग्लचणा चेष्टा ईशितव्यानि भवद्भिर्नियम्यानि प्रज्ञकुलानि स्तुवन्ति यद्यस्मात्तस्मात् ॥ २८ ॥

मुनिः स्वयमेव स्तवनादेरभिप्रायं वक्ति, धर्ममिति । न केवलं देहिनां धर्मस्य प्रवक्तारः आचरन्ति च आचरतोनुमोदन्ते क्रियमाणं धर्मं स्तुवन्ति च ॥ २९ ॥

ननु, विद्यादिवर्जितानां भवतां धर्माचरणादिना तेजः क्षतिः स्यादित्यत आह—नेति । "कृतिस्तु ग्रन्थसन्दर्भे" इति वचनात् स्वमायामयवृत्तिभिः स्वेच्छया कृता वृत्तिर्येषां ते तथा तैः स्तवा-दिभिर्विद्वद्भिरेतावता कर्मणा भगवतोनुभावः प्रभावो न प्रदुष्येत प्रदुष्टो न भवति कुहकैरिन्द्रजालव्यापारैर्मायिनोनुभावः तिरस्कार्यो यथा तथेति ॥ ३० ॥

प्रकारान्तरेण दोषाभावं वक्ति, सृष्ट्वेति । यो भगवान् मनसा स्वेच्छया इदं विश्वं सृष्ट्वान्तर्यामिरूपेणान्तःप्रविश्य दर्शनादिकुर्वद्भि-र्गुणैरिन्द्रियैरहङ्कृतेति निरूप्य जीव इवाभातीत्येतावता जीव-वत् दुष्टो न भवति, कथमिव स्वप्नद्रष्टभगवदिच्छयोद्बोधितमानस-वासनया करितुरगादिपदार्थान् सृष्ट्वा यथा तद्द्रष्टेव क्लिष्टो न भवति ॥ ३१ ॥

तस्मै भगवते नम इत्यन्वयः त्रयः सत्त्वादयो गुणा यस्य स तथा तस्मै गुणित्वं दोषत्वेन स्यात् इत्यत आह केवलायेति निर्दोषाय निर्दोषत्वं मुक्तस्याप्यस्तीति तत्राह, अद्वितीयायेति । मुक्तनिर्दोषत्वं हरिप्रसादायत्तं न हरेस्तथा तस्य समाधिकशून्यत्वात् कथमयमर्थः सम्पद्यत इत्यत्राह, गुरव इति । ब्रह्मादीनां स्वात्म-रहस्योपदेष्टृत्वेन गुरुत्वात्तेषां सिद्ध इत्यर्थः । निराकारस्योपदेष्टृत्वं कथं घटत इति तत्राह, ब्रह्मेति । ज्ञानादिगुणाकाराय बृहन्तो ह्यस्मिन् गुणा इति श्रुतावस्मिन्निति वचनादाकारः सिद्ध इति ॥ ३२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धर्मगुह्यं भगवद्भक्तिलक्षणं तेनोपबृंहितम् अत एवामृतायनं परमानन्दस्याप्याश्रयरूपम् अत एव नातृप्यत् ननु स्वस्तुत्ये-त्यर्थः ॥ २६ ॥

विष्णुमाययेति स्वेच्छयैवाङ्गीकृतयेत्यर्थः । शिवस्याप्यत्र विपच्चा-विष्टत्वं व्याख्यातम् इति न भेदो मन्तव्यः ॥ २७—२८ ॥

धर्ममित्यत्र भाव इति क्वचित्तत्र निजरुच्या च देहिना-मिति देहस्य यत्कर्म तदेवात्मन इति मन्यमानानामित्यर्थः । अत एव प्रवक्तारस्तद्रूपविरिक्ताः ॥ २९ ॥

तेषु मुख्यं भगवन्तमवलम्ब्य तत्र दोषान्तरं निरस्यति—नैतावतेति त्रिभिः । अप्रकोपे हेतुः । स्वेषु भक्तेषु यामाया कृपात्मिका-वृत्तिभिरिति मम भक्तपरम्परास्वेषा रीतिः प्रवर्तेतेति कृपया स्वीकृतविषयतयेत्यर्थः । तत्र व्यतिरेकेण दृष्टान्तः मायिनः कुहकं यथा प्रदुष्येत तथेति न दुष्यतेति पाठेपि मायिनः कुहकं यथा दुष्येत तथा न किन्तु न दुष्येतैवेत्यर्थः ॥ ३०—३२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

धर्मः एकान्तभक्ता इति नात्मनश्च परस्येत्यादि गुह्यं ननु युष्मान् वयमिमहीयाहिताभ्यामुपबृंहितं नातृप्यदिति नाहं स्वस्तवोत्थ आनन्दः किन्तु स्तुतिमिषेणास्मान् धर्ममेवाशिक्ष-यत्स्मादेतादृशधर्मवता मया भवितव्यमित्युपदेशप्राप्त्युत्थ एव ज्ञेयः ॥ २६ ॥ २७ ॥

दुर्विभाव्या अतर्क्या ईशितव्यानि स्वनियम्यान्यपि भूतानि ॥ २८ ॥

अथवा लोकसङ्ग्रहमात्रमेतदित्याह—धर्ममिति । क्रियमाणं धर्मं स्तुवन्तीति अन्योऽयं धर्मः यः स्वयमेतादृशैर्महद्भिः क्रियते इति धर्मस्तुतिर्धर्मकर्तृत्वेव पर्यवस्यति ॥ २९ ॥

एतावता लोकसङ्ग्रहमात्रेण तैर्भवादिभिस्तवानुभावो न प्रदुष्यति कीदृशैः मायामयेव वृत्तिश्चेष्टा येषु तैः मायिनः कुहकमिति धनप्राप्तिहेतुना ऐन्द्रजालिकेन केनचित् स्वमुखा-दुद्भावितः कश्चिन्नरः स्तूयते नमस्क्रियते च तेन तस्या-नुभावो न दुष्यतीति न दुष्येतेति पाठे नकारस्य दृष्टान्ते-नानुषङ्गः । यद्यपि श्रीरुद्रेण तदीयस्तुत्यादयो न मायया कृता-स्तथापि स्वस्तुत्या लज्जितेन मुनिना प्रयुक्तोऽयं दृष्टान्तो नानु-पपन्नः ॥ ३० ॥

मनसा सङ्कल्पमात्रेण कुर्वद्भिर्गुणैः स्वीयैः जीववत्कर्तापि कर्तेवाभातीति न गुणलेप इति भावः । अविद्यया सर्गं सृजतो जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुत तस्येति दर्शयन् दृष्टान्तयति स्वप्नदृग् यथेति ॥ ३१ ॥

गुणात्मने गुणनियन्त्रे ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

चन्द्रः ललामः शिरोभूषणं यस्य इति पूर्वोक्तम् धर्मस्य साधवः शान्ता इत्यादि स्तुतिविशेषोपदिष्टस्य गुह्यम् मय्यच्युते मजे चेत्यश्लोकेन तत्त्वसम्बन्धरूपरहस्येन च युक्तम् अत एवामृतायनममृतास्पदम् कर्णयोः कर्णाभ्यां पिबन्नपि नातृप्यत् ॥ २६ ॥

शिवस्य वागमृतेन ध्वस्तो निरस्तः क्लेशपुञ्जो यस्य सः ॥ २७ ॥

ईश्वरचर्या ईश्वराणां भवतोऽजस्याच्युतस्य च लीला दुर्वि-भाव्या दुर्वितर्क्या ईशितव्यानि स्वनियम्यानि ॥ २८ ॥

ईश्वरा सन्तोपीशितव्यानि नमन्तीत्यत्र तदभिप्रायमाविष्करोति, धर्ममिति । देहिनां प्रवक्तारोपि धर्मभाववितारोपि स्वयं गुरवो-पीत्यर्थः । तथापि धर्मं ग्राहयितुमाचरन्ति प्रायग्रहणेन "आद्वृत्ति-रसकृदुपदेशात्" (४।१।१) इति शास्त्रावापादनायैवमाचरन्तीति द्योतितम् ॥ २९ ॥

एतावता धर्मग्राहयितृत्वेन हेतुना क्षमायामयावृत्त्या प्रभा-

कं वृणे नु परं भूमन् ! वरं त्वद्वरदर्शनात् ।
यद्दर्शनात्पूर्णकामः सत्यकामः पुमान् भवेत् ॥ ३३ ॥
वरमेकं वृणेऽथापि पूर्णात्कामाभिवर्षणात् ।
भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि ॥ ३४ ॥

सूत उवाच ।

इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा ।
तमाह भगवान् शर्वः शर्वया चाभिनन्दितः ॥ ३५ ॥
(१)कामो महर्षे ! सर्वोऽयं भक्तिमांस्त्वमधोक्षजे ।
आकल्पान्ताद्यशः पुण्यमजरामरता तथा ॥ ३६ ॥
ज्ञानं त्रैकालिकं ब्रह्मन् ! विज्ञानं च विरक्तिमत् ।
ब्रह्मवर्चस्विनो भूयात्पुराणाचार्यताऽस्तु ते ॥ ३७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नान्तर्लिंगेषु एवम्भूतैस्तैर्नमनादिभिः भगवतोऽनुभावो न प्रच्युतेत न विहन्येत तत्र दृष्टान्तमाह, मायिनःकुहक यथाति मायिनो नटादेः कुहकं नाट्यादिकं तदनुभावं न दूषयति यथा तद्वत् ॥ ३० ॥

समान्यतः ईश्वराणां स्तुतिं कृत्वा विशेषतो हरिं प्रणमति—सृष्टति द्वाभ्याम् । यश्च सर्वोपास्यः स्वयं हरिरिति निर्दिष्टः मनसा सङ्कल्पमात्रेणेदं विश्वं सृष्ट्वाऽनुप्रविष्टः गुणैः प्राक्कर्मानुरूपैः सत्त्वादिभिः देवमनुष्यादिविषमसृष्टिं कुर्वद्भिः स्वयं विषमसृष्टिकर्त्तेवाभाति तस्मै नम इति द्वयोरन्वयः । अवैषम्यकर्तुरपि वैषम्यकर्तृत्वावभासे दृष्टान्तमाह, स्वप्नदृग्यथेति "य एष सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्मिमाणः तद्ब्रह्म" इति श्रुतिप्रसिद्धः परमात्मा स्वप्नरथादिस्रष्टा भवति भ्रान्त्या तु स्वप्नद्रष्टृ जीवस्तत्कर्ता प्रतीयते तद्वदित्यर्थः ॥ ३१ ॥

अत्रिगुणाय त्रिगुणविग्रहादिसम्बन्धशून्याय गुणात्मने गुणनियन्त्रे केवलाय स्वाश्रयाय अद्वितीयाय निःसमानातिशयाय ब्रह्ममूर्तये बृहद्विग्रहाय ॥ ३२ ॥

---

भाषाटीका ।

महापातकी लोग भी तथा अन्त्यज चांडाल लोग भी आपके श्रवण और दर्शन से शुद्ध होजाते हैं, फिर सम्भाषणादि से तो कहना ही क्या ॥ २५ ॥

सूत उवाच ॥

चन्द्रललाम श्रीमहादेवजी का धर्म रहस्य युक्त और अमृत के आस्पद ऐसे वचनों को कर्णों के द्वारा पीते हुये ऋषि तृप्त न हुये ॥ २६ ॥

वह मार्कंडेय ऋषि बहुत काल से श्रीविष्णु के माया से भ्रमते रहे, इस कारण अत्यन्त कर्षित रहे । अब शिवजी की अमृत रूप वाणी से ऋषि के सब क्लेश पुंज नष्ट हुए तब ऋषि महादेवजी से बोले ॥ २७ ॥

ऋषिरुवाच ।

मार्कंडेयजी बोले, कि—अहो ! समर्थ ईश्वर लोगों की लीला मनुष्यों की तर्कना में नहीं आसक्ती है । क्योंकि—वे जगदीश्वर होकर भी अपने नियम्यजनों की स्तुति करा करते हैं ॥ २८ ॥

प्रायः करके बड़े ईश्वर लोग अन्य लोगों को धर्म सिखाने के लिये आप धर्म कहते हैं, आचरण करते हैं और अनुमोदन करते हैं, तथा जो कोई आचरण करता है उसकी प्रशंसा भी करते हैं ॥ २९ ॥

अपनी कृपा प्रधान वृत्ति वाले इन आचरणों से आप लोगों का प्रभाव भी दूषित नहीं होता है, जैसे, कि प्रसिद्ध मायावी के कपटाचरण से उसका प्रभाव नहीं दूषित होता है ॥ ३० ॥

जो आप अपने मन से इस विश्व को रचकर आपही इसमें प्रविष्ट होकर कार्य करने वाले गुणों से आप कर्त्ता सदृश मालूम होते हो, जैसे स्वप्न का देखने वाला ईश्वर रचित स्वप्न रथ पदार्थों का कर्त्ता आप ही मालूम होता है ॥ ३१ ॥

भगवान् त्रिगुण वाले, गुणात्मक, केवल, अद्वितीय, ब्रह्ममूर्त्ति, ऐसे जो गुरु आप हो तिनको नमस्कार हो ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

वरं वृणीष्वेति यदुक्तं तत्राऽऽह—कमिति । वरं दर्शनं यस्य तस्मात् त्वत्तः परं कं नु वरं वृणे यस्य तव दर्शनावलोकनात्पूर्णकामः सर्वानन्दसन्दोहरूपः सत्यकामो यथेच्छं प्राप्तसर्वानन्दः ॥ ३३ ॥ ३४ ॥

वरदानाय स्वयमेव प्रवृत्तः शर्व उमया चाऽऽभिनन्दितोऽनुमोदितः सन्नाह ॥ ३५ ॥

---

(१) कामस्तेय महर्षेऽस्तु इति पाठान्तरम् ।

### श्रीधरस्वामिकृतभावार्थदीपिका ।

कामोऽयं सर्वोऽप्यस्तु यत्पुरुषं यत्र ब्रह्मविद्ब्रह्मवर्चस्विनस्ते भूयादित्युत्तरेणान्वयः यतस्त्वमधोक्षजे भक्तिमान् ॥ ३६ ॥ ३७ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शर्वया शर्वपत्न्या ॥ ३४—३५ ॥
ज्ञानं तत्त्वज्ञानं ब्रह्मवर्चस्विनः वृद्धवर्चस्विनः ॥ ३६—४० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदुक्तं वरं वृणीष्वेति तत्रोत्तरमाह—कमिति । हे भूमन् ! मद्दर्शनात् त्वत्तः अतः परमन्यं कं वरं वृणे वरिष्ठानां वरं बुद्ध्या सन्निधाप्यत इति निर्देशः कृतः मद्दर्शनादिति पाठे वरं श्रेष्ठं दर्शनं यस्य तस्मात्त्वत्तः भगवच्छब्दविवक्षितं विशिनष्टि, यदीशानः पूर्णकाम इति । यत् यतः पुमान् ईशानः ईश्वरः स्वतन्त्रः अकर्मवश्य इति यावत् पूर्णकामः सत्यकामश्च भवेत्तस्मादिति सम्बन्धः ॥ ३३ ॥

यद्यप्यतः परो वरणीयो वरो नास्ति तथापि पूर्णकामाभिवर्षुकात्त्वत्त एतं वरं वृणे एतद्देशाभाव आर्षः कोऽसौ भगवत्यच्युते तत्परेषु तद्भक्तेषु तथा त्वयि च भक्तिमित्यनेन वरमिति सम्बन्धः तत्परेष्वित्यनेन गतार्थत्वेऽपि पुनस्त्वयीत्युक्तिस्तत्प्राधान्यविवक्षया गोबलीवर्दन्यायात्तत्र भगवद्भक्तेषु भक्तिर्नाम भगवद्विभूतित्वानुसन्धानुसन्धानात्मिका ॥ ३४ ॥

इतीति । सूक्तया मधुरया शर्वया शर्वाण्या अभिनन्दितस्तं मुनिमाह ॥ ३५ ॥

उक्तिमेवाह—ब्रूयां काममिति । विभौ भगवति कामं नितरां भोतृणां पुण्यावहम् वचः ॥ ३६ ॥

त्रैकालिकं भूतादिकालत्रयगोचरवस्तुज्ञानं विज्ञानं ब्रह्मस्वरूपरूपादिगोचरं विज्ञानं विरक्तिमत् विरक्तियुक्तम् ॥ ३७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत एवं निरूप्यमाणे हरेरधिकः समो वा नास्ति सर्वश्रेष्ठश्चातस्तद्भक्तिमन्तरेण त्वत्परमन्यं कं वरं वृणे वरं वरेण्यं दर्शनम् ज्ञानम् यस्य स तथा तस्मात् एतदेवाह—यद्दर्शनाद्येनोपदिष्टज्ञानाद्वा पुमान् पूर्णकामः स्यात् अत एव सत्यकामश्च ॥ ३३ ॥

मद्दर्शनात्पूर्णकामत्वे वरं वृणीष्वेति मद्वचनं व्यर्थमभूदिति मा शङ्किष्ठा इत्याह—वरमिति । यद्यपि वरो न प्रार्थनीयस्तथापि त्वद्वचनसाफल्यार्थं वरं वृणे पूर्णकामाभिवर्षणादिति शेषः कोऽसौ वर इति तत्राह—भगवतीति । तत्परेषु तद्भक्तश्रेष्ठे त्वयि च ॥ ३४ ॥

शर्वया पार्वत्या सह ॥ ३५ ॥

त्वम् अधोक्षजे भक्तिमान् भूया इति शेषः । आकल्पान्तं पुण्यम् यशो ऽजरामरता च भूयात्त्वेति शेषः ॥ ३६ ॥

किञ्च, यदन्तरं च इत्यादित्याह—ज्ञानमिति ॥ ३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

दोषाश्पर्शमेव दर्शयति—सृष्टेदमिति, युग्मकेन । इदं विश्वं मनसा सङ्कल्पेनैव निमित्तेन गुणैः उपादानैः सृष्ट्वापि तत्तदात्मना स्वयं तदनुप्रविश्य प्रवेशेन स्थापयित्वाऽपि तत्तदुपलक्षणत्वेन संहृत्यापि कर्तृत्वदेवाभाति ननु कर्त्तैवेति तत्र हेतुत्वाय गुणान् विशिनष्टि—कुर्वद्भिरिति । तत्सान्निध्यप्रभावेण चेतना इव गुणा एव सर्वं कुर्वन्ति ननु स्वयमिति सङ्कल्पस्याभासमात्रत्वेन तत्सम्बन्धादित्यर्थः । तत्राविद्यया स्वप्नं सृजतस्तदीयवट्टर्शनस्य जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुत तस्येति दर्शयन् दृष्टान्तयति—स्वप्नस्यथात । अथ अभूतामयत्वेमरूपा गुणा यस्य तस्मै गुणा ऐश्वर्यादयोऽपि आत्मानः स्वरूपभूता यस्य तस्मै केवलाय प्रकृतिसङ्गशून्याय अद्वितीयाय स्वतुल्यरहिताय अत एव गुरवे सर्वोपदेष्ट्रे ब्रह्मोति स्वोपदेश्यम् यद्ब्रह्म वेदः तदपि मूर्त्तिः स्वरूपम् यस्य तस्मै ॥ ३१ (क) ३३ ॥

तथा त्वयीति त्वयि च तत्पर इत्यर्थः—

"किं वर्णये तव विभो यदुदीरितोऽसुः—
संस्पन्दते तमनु वाङ्मन इन्द्रियाणि ॥
स्पन्दन्ति वै तनुभृतामजशर्वयोश्च" ॥

इत्यनेनैव श्रीनारायणर्षि प्रत्युक्तत्वात् ॥ ३४—४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वरं वृणुष्वेति यदुक्तं तत्राह—किमिति । वरो दर्शनम् यस्य तस्मात् सत्यकामः सत्यसङ्कल्प एव तत्परेषु तद्भक्तेषु तथा तद्भक्तश्रेष्ठे त्वयि भक्त्युपदेष्टरि गुरौ तेन त्वयि मे भक्तिस्तद्भक्तत्वेनैवास्तु नत्वीश्वरत्वेनेति भावः ॥ ३३ ॥ ३५ ॥

अयं सर्वोऽपि कामस्ते अस्तु यतस्त्वमधोक्षजे भक्तिमान् ॥ ३६—४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शिवं प्रत्याह—कमिति द्वाभ्याम् । यदुक्तं वरं वृणीष्व नः काममिति तत्र कं परं श्रेष्ठं वरं वृणे यत् यस्य ॥ ३३ ॥

भगवति श्रीहरौ तद्भक्तेषु त्वयि तद्भक्तमुख्ये च ॥ ३४ ॥

अत एव वरं दातुं प्रवृत्तः शर्वयोमया वाग्भिर्नन्दितो ऽनुमोदितः सन् तं मुनिमाह ॥ ३५ ॥

अयं सर्वोऽपि कामस्तेऽस्तु यतस्त्वमधोक्षजे भक्तिमान् यत्र भाविन ब्रह्मवर्चस्विनस्ते भूयादित्यग्रिमेणान्वयः ॥ ३६—३७ ॥

---

